# अग्निष्टोमे पशुः ।

[ अथ तृतीयः प्रपाठकः ॥ ३ ॥ ] चन्द्रऋषिः ।

सदोमण्डपनिर्माणम् ॥ अनुष्टुप् ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा ऽऽ ददे[1]ऽभ्रिरसि नारिरसि[2] परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि[3] दिवे त्वा[4]ऽन्तरिक्षाय त्वा[5] पृथिव्यै त्वा[6] शुन्धतां लोकः पितृषदनो[7] यवोऽसि यवयास्मद्द्वेषो (१) यवयाऽरातीः[8] पितृणाꣳ सदनमस्यु[9]द्दिवꣳ स्तभानाऽन्तरिक्षं पृण पृथिवीं दृꣳह[10] द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणा[11] ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि[12] ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह[13] घृतेन द्यावापृथिवी आ पृणेथा[14]मिन्द्रस्य सदोऽसि[15] विश्वजनस्य छाया[16]

परि त्वा गिर्वणो गिर इमा (२) भवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय[17]

इन्द्रस्य स्यूरसी[18]न्द्रस्य ध्रुवमस्यै[19]न्द्रमसीन्द्राय त्वा[20] ॥ ( द्वेष, इमा, अष्टादश च १८ ) ॥ १ ॥

उपरवनिर्माणम् ॥

रक्षोहणो वलगहनो वैष्णवान् खनामी[1]दमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो योऽसमानोऽरातीयति[2] गायत्रेण छन्दसाऽवबाढो वलगः[3] किमत्र[4] भद्रं[5] तन्नौ सह[6] विराडसि सपत्नहा[7] सम्राडसि भ्रातृव्यहा[8] स्वराडस्यभिमातिहा[9] विश्वाराडसि विश्वासां नाष्ट्राणाꣳ हन्ता[10] (१) रक्षोहणो वलगहनः प्रोक्षामि वैष्णवान्[11] रक्षोहणो वलगहनोऽव नयामि वैष्णवान्[12] यवोऽसि यवयास्मद्द्वेषो यवयाराती[13] रक्षोहणो वलगहनोऽव स्तृणामि वैष्णवान्[14] रक्षोहणो वलगहनोऽभि जुहोमि वैष्णवान्[15] रक्षोहणौ वलगहनावुप दधामि वैष्णवी[16] रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी[17] रक्षोहणौ वलगहनौ परि स्तृणामि वैष्णवी[18] रक्षोहणौ वलगहनौ वैष्णवी[19] बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय (२) वाचं वद[20] ॥ (हन्ते, –न्द्राय, द्वे च २) ॥ २ ॥

धिष्णियाः ॥

विभूरसि प्रवाहणो[1] वह्निरसि हव्यवाहनः[2] श्वात्रोऽसि प्रचेता[3]स्तुथोऽसि विश्ववेदा[4] उशिगसि कवि[5]रङ्घारिरसि बम्भारि[6]रवस्युरसि दुवस्वा[7]ञ्छुन्ध्यूरसि मार्जालीयः[8] सम्राडसि कृशानुः[9] परिषद्योऽसि पवमानः[10] प्रतक्वाऽसि नभस्वा[11]नसंमृष्टोऽसि हव्यसूद[12] ऋतधामाऽसि सुवर्ज्योति[13]र्ब्रह्मज्योतिरसि सुवर्धामा[14]ऽजोऽस्येकपाद[15]हिरसि बुध्नियो रौद्रेणानीकेन (१) पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः[16] ॥ ( अनीकेनाष्टौ च ८ ) ॥ ३ ॥

---

( १।१७ ) ऋ० १।१०।१२

वैसर्जनीयहोमः ॥ १,५ गायत्री, ३ त्रिष्टुप्, ४ अनुष्टुप् ।

त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ ॥
स्वाहा[1] जुषाणो अप्तुराज्यस्य वेतु स्वाहा[2]—
ऽयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयꣳ शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ[3] ॥
उरु विष्णो वि क्रमस्वोरु क्षयाय नः कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर[4] ॥
सोमो जिगाति गातुविद् (१) देवानामेति निष्कृतमृतस्य योनिमासदम्[5]—

—दित्याः सदोऽस्य[6]—दित्याः सद आ सीद[7] वो देव सवितः सोमस्तꣳ रक्षध्वं मा वो दभदे[8]—तत् त्वꣳ सोम देवो देवानुपागा[9] इदमहं मनुष्यो मनुष्यान् सह प्रजया सह रायस्पोषेण[10] नमो देवेभ्यः[11] स्वधा पितृभ्य[12] इदमहं निर्वरुणस्य पाशात्[13] सुवरभि (२) वि ख्येषं[14] वैश्वानरं ज्योति[15]—रग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियꣳ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानि[16] ॥ ( गातुविद्-, ख्ये,- कत्रिꣳशच्च ३१ ) ॥ ४ ॥

यूपच्छेदनम् ॥

अत्यन्यानगां नान्यानुपागामर्वाक्त्वा परैरविदं परोऽवरै[1]—स्तं त्वा जुषे वैष्णवं देवयज्यायै[2] देवस्त्वा सविता मध्वाऽनक्त्वो[3]—षधे त्रायस्वैनꣳ[4] स्वधिते मैनꣳ हिꣳसी[5]—र्दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या सं भव[6]
वनस्पते शतवल्शो वि रोह सहस्रवल्शा वि वयꣳ रुहेम ।
यं (१) त्वाऽयꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय[7]—
ऽच्छिन्नो रायः सुवीरः[10] ॥ ( यं, दश च १० ) ॥ ५ ॥

यूपस्थापनम् ॥ ११ त्रिष्टुप्, १२-१३ गायत्र्यौ ।

पृथिव्यै त्वा[1]—ऽन्तरिक्षाय त्वा[2] दिवे त्वा[3] शुन्धतां लोकः पितृषदनो[4] यवोऽसि यवयास्मद् द्वेषो यवयारातीः[5] पितॄणाꣳ सदनमसि[6] स्वावेशोऽस्यग्रेगा नेतॄणां वनस्पतिरधि त्वा स्थास्यति तस्य वित्ता[7]—द्देवस्त्वा सविता मध्वाऽनक्तु[8] सुपिप्पलाभ्यस्त्वौषधीभ्य[9] उद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृꣳह[10]
ते ते धामान्युश्मसि (१) गमध्ये गावो यत्र भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य विष्णोः परमं पदमव भाति भूरेः[11] ॥
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा[12] ॥

---

( ४।१ ) ऋ० ८।७९।३; ( ४।५ ) ऋ० ३।६२।१३; (५।७-९) यं त्वामयं...तेजमानः...सौभगाय ॥ ऋ० ३।८।११; ( ६।११ ) ता वां वास्तून्युश्मसि गमध्यै यत्र गावो । ...तदुरुगायस्य वृष्ण...भूरि ॥ ऋ० १।१५४।६; ( ६।१२ ) ऋ० १।२२।१९;

तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्[13] ॥

ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि[14] ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं (२) दृꣳह[15] परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमꣳ रायस्पोषो यजमानं मनुष्या[16] अन्तरिक्षस्य त्वा सानाववं गूहामि[17] ॥ (इमसी, पोषमे –, कान्नविꣳशतिश्च १९ ) ॥ ६ ॥

पशोरुपाकरणम् ॥ १३ पङ्क्तिः, १४ त्रिष्टुप्।

इषे त्वो[1]—पवीरस्यु[2]—पो देवान् दैवीर्विशः प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तां देव त्वष्टर्वसु रण्व रेवती रमध्वम्[3]—ग्रेर्जनित्रमसि[4] वृषणौ स्थ[5] उर्वश्यस्या[6]—युरसि[7] पुरूरवा[8] घृतेनाक्ते वृषणं दधाथां[9] गायत्रं छन्दोऽनु प्र जायस्व[10] त्रैष्टुभं[11] जागतं छन्दोऽनु प्र जायस्व[12]

भवतं (१) नः समनसौ समोकसावरेपसौ।<br>
मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः[13] ॥<br>
अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः।<br>
स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुया कर्भागधेयम्[14] ॥<br>
( भवतमेकत्रिꣳशच्च ३१ ) ॥ ७ ॥

उपाकृतस्य पशोर्विशसनम्। १२ त्रिष्टुप्, १६ अनुष्टुप् ॥

आ ददे[1] ऋतस्य त्वा देवहविः पाशेनाऽऽरभे[2] धर्षा मानुषान्[3]—द्भ्यस्त्वौषधीभ्यः प्रोक्षाम्य[4]—पां पेरुरसि[5] स्वात्तं चित् सदेवꣳ हव्यमापो देवीः स्वदतैनꣳ[6] सं ते प्राणो वायुना गच्छताꣳ सं यजत्रैरङ्गानि[8] सं यज्ञपतिराशिषा घृतेनाक्तौ पशुं त्रायेथाꣳ[10] रेवतीर्यज्ञपतिं प्रियधाऽऽविशतो[11]—रो अन्तरिक्ष सजूर्देवेन (१) वातेनाऽस्य हविषस्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञे यज्ञपतिं धाः[12] पृथिव्याः सम्पृचः पाहि नमस्त आतानाऽ—ऽनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणा[15]—ऽऽपो देवीः शुद्धायुवः शुद्धा यूयं देवाꣳ ऊढ्वꣳ शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्म[16] ॥ ( देवेन, चतुश्चत्वारिꣳशच्च ४४ ) ॥ ८ ॥

संज्ञपितस्य पशोर्वपोत्खेदनम् ॥

वाक्त आ प्यायतां[1] प्राणस्त आ प्यायतां[2] चक्षुस्त आ प्यायताꣳ[3] श्रोत्रं त आ प्यायतां[4] या ते प्राणाञ्छुग्जगाम या चक्षुर्या श्रोत्रं यत् ते क्रूरं यदास्थितं तत् त आ प्यायतां तत् त एतेन शुन्धतां[5] नाभिस्त आ प्यायतां[6] पायुस्त आ प्यायताꣳ[7] शुद्धाश्चरित्राः शमद्भ्यः (१) शमोषधीभ्यः शं

---

( ६।१३ ) ऋ० १।२२।२०; ( ७।१३ ) समनसौ सचेतसावरेपसौ। वा० य० ५।३, १२।६०; ( ७।१४ )......पुत्रो अभिशस्तिपा उ। नमस्कारेण नमसा...मिथुया कर्म भागम् ॥ अथर्व० ४।३९।९, ( ७।१४ ) पुत्रो अभिशस्तिपावा। वा० य० ५।४

पृथिव्यै शमहांभ्यो—मोषधे त्रायस्वैन॑२ स्वधिते मैनं॑ हिꣳसी११ रक्षसां भागोऽसीद—मह॑ रक्षोऽधमं तमो नयामि योऽस्मान् द्वेष्टि यं च॑ वयं द्विष्म इदमेनमधमं तमो नयामी१३—षे त्वा१४ घृतेन॑ द्यावापृथिवी प्रोर्णुवाथाम्१५—च्छिन्नो रायः सुवीर॑१६ उर्वन्तरिक्षमन्विहि१७ वायो वीहि (२) स्तोकाना१८ स्वाहोर्ध्वनभसं मारुतं गच्छतम्१९ ॥ ( अग्नयो, वीहि, पञ्च च ५ ) ॥ ९ ॥

वसाहोमः ॥

सं ते मनसा मनः सं प्राणेन॑ प्राणो जुष्टं देवेभ्यो॑ हव्यं घृतवत् स्वाहै१—न्द्रः प्राणो अङ्गेअङ्गे नि देध्यदैन्द्रोऽपानो अङ्गेअङ्गे वि बोभुवद्देव॑ त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यत् सलक्ष्माणो भवथ देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो॑ मदन्तु२ श्रीरस्यग्निस्त्वा श्रीणात्वापः समरिणन्३ वात॑स्य ( १ ) त्वा ध्रज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्यै४ घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वाऽन्तरिक्षाय५ दिशः६ प्रदिश७ आदिशो८ विदिश९ उद्दिशः स्वाहा१० दिग्भ्यो११ नमो दिग्भ्यः१२ ॥ ( वातस्याष्टाविꣳशतिश्च २८ ) ॥१०॥

गुदकाण्डहोमः ॥

समुद्रं गच्छ स्वाहा१—ऽन्तरिक्षं गच्छ स्वाहा२ देवꣳ सवितारं गच्छ स्वाहा३—ऽहोरात्रे गच्छ स्वाहा४ मित्रावरुणौ गच्छ स्वाहा५ सोमं गच्छ स्वाहा६ यज्ञं गच्छ स्वाहा७ छन्दाꣳसि गच्छ स्वाहा८ द्यावापृथिवी गच्छ स्वाहा९ नभो दिव्यं गच्छ स्वाहा१०—ऽग्निं वैश्वानरं गच्छ स्वाहा११—ऽद्भ्यस्त्वौषधीभ्यो१२ मनो मे हार्दि यच्छ तनूं त्वचं पुत्रं नप्तारमशीय१३ शुगसि ( १ ) तमभि शोच योऽस्मान् द्वेष्टि यं च॑ वयं द्विष्मो१४ धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो॑ वरुण नो मुञ्च१५ ॥ ( असि, षड्विꣳशतिश्च २६ ) ॥११॥

वसतीवरीसंज्ञकानामपामुपादानम् ॥ १ अनुष्टुप् ।

हविष्मतीरिमा आपो॑ हविष्मान् देवो अध्वरो
हविष्माꣳ आ विवासति हविष्माꣳ अस्तु सूर्यः१ ॥

अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि२ सुम्नाय सुम्निनीः सुम्ने मा धत्ते३—न्द्राग्नियोर्भागधेयीः स्थ४ मित्रावरुणयोर्भागधेयीः स्थ५ विश्वेषां देवानां भागधेयीः स्थ६ यज्ञे जागृत७ ॥ ( हविष्मतीश्चतुस्त्रिꣳशत् ३४ ) ॥ १२ ॥

सोमस्य शकटादुपावरोहः ॥ ३ त्रिष्टुप्, ७ गायत्री ।

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्वमिममध्वरं कृधि दिवि देवेषु होत्रा यच्छ१ सोम राजन्नेह्यव रोह मा भेर्मा सं विक्था मा त्वा॑ हिꣳसिषं प्रजास्त्वमुपावरोह प्रजास्त्वामुपावरोहन्तु२

(१०।२) स-लक्ष्मा यद्विषुरूपो भवाति॥ ऋ० १०।१०।२; (१२।१) हविष्मं अस्तु सूर्यः॥ मै. सं. १।३।१; हविष्माँ आविवासति। हविष्मान् देवो अध्वरो....सूर्यः॥ वा. य. ६।२३

शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः ।
शृणोत ग्रावाणो विदुषो नु ( १ ) यज्ञꣳ शृणोतु देवः सविता हवं मे[३] ।
देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं देवेभ्यो देवत्रा धत्त शुक्रꣳ शुक्रपेभ्यो येषां भागः स्थ स्वाहा कार्षिरस्यपापां मृध्रꣳ समुद्रस्य वोक्षित्या उन्नये[६] ।
यमग्ने पृत्सु मर्त्यमावो वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः[७] ॥
( नु, सप्तचत्वारिꣳशच्च ४७ ) ॥ १३ ॥

काम्ययाज्यापुरोऽनुवाक्याः ॥ १-६,८,१०,१२,१४,१६-१८,२२त्रिष्टुप्; ७,९,१३,१५,२१,२३-२८ गायत्री; ११,१९-२० अनुष्टुप् ।

त्वमग्ने रुद्रो असुरो महो दिवस्त्वꣳ शर्धो मारुतं पृक्ष ईशिषे ।
त्वं वातैररुणैर्यासि शङ्गयस्त्वं पूषा विधतः पासि नु त्मना[१] ॥
आ वो राजानमध्वरस्य रुद्रꣳ होतारꣳ सत्ययजꣳ रोदस्योः ।
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम्[२] ॥
अग्निर्होता नि षसादा यजीयानुपस्थे मातुः सुरभावु लोके ।
युवा कविः पुरुनिष्ठ ( १ ) ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः[३] ॥
साध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्याम् ।
स आयुरागात् सुरभिर्वसानो भद्रामकर्देवहूतिं नो अद्य[४] ॥
अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः[५] ॥
त्वे वसूनि पुर्वणीक ( २ ) होतर्दोषा वस्तोरेरिरे यज्ञियासः ।
क्षामेव विश्वा भुवनानि यस्मिन्त्सꣳ सौभगानि दधिरे पावके[६] ॥
तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे[७] ॥
अश्याम तं काममग्ने तवोत्यश्याम रयिꣳ रयिवः सुवीरम् ।
अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते[८] ॥
श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा भर । ( ३ ) वसो पुरुस्पृहꣳ रयिम्[९] ॥
स श्वितानस्तन्यतू रोचनस्था अजरेभिर्नानदद्भिर्यविष्ठः ।
यः पावकः पुरुतमः पुरूणि पृथून्यग्निरनुयाति भर्वन्[१०] ॥

---

( १३।७ ) यमग्ने ... ... मर्त्यमवा ... ... । ... ... शश्वतीरिषः ॥ ऋ० १।२७।७; ( १४।१ ) ऋ० २।१।६; ( १४।२ ) ऋ० ४।३।१; ( १४।३ ) अग्निर्होता निषसादा यजीयान् । ऋ० ५।१।५; अग्निर्होता न्यसीदत् ... ... लोके। ... ... इद्धः ॥ ऋ० ५।१।६; ( १४।४ ) ऋ० १०।५३।३; ( १४।५ ) ऋ० १०।४५।४; ( १४।६ ) ऋ० ६।५।२; ( १४।७ ) ऋ० ८।४३।१८; ( १४।८ ) ऋ० ६।५।७; ( १४।९ ) ऋ० २।७।१; ( १४।१० ) ऋ० ६।६।२;

आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः ।
पुनस्ते प्राण आयति परा यक्ष्मꣳ सुवामि ते[११] ॥
आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि (४) रक्षतादिमम्[१२] ॥
तस्मै ते प्रतिहर्यते जातवेदो विचर्षणे । अग्ने जनामि सुष्टुतिम्[१३] ॥
दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः[१४] ॥
शुचिः पावक वन्द्योऽग्ने बृहद्वि रोचसे । त्वं घृतेभिराहुतः[१५] ॥
दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो अभवद्वयोभि (५) र्यदेनं द्यौरजनयत् सुरेताः[१६] ॥
आ यदिषे नृपतिं तेज आनट् शुचि रेतो निषिक्तं द्यौरभीके ।
अग्निः शर्धमनवद्यं युवानꣳ स्वाधियं जनयत् सूदयच्च[१७] ॥
स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः ।
अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः[१८] ॥
अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम् ।
विश्वा य (६) श्चर्षणीरभ्यासा वाजेषु सासहत्[१९] ॥
तमग्ने पृतनासहꣳ रयिꣳ सहस्व आ भर ।
त्वꣳ हि सत्यो अद्भुतो दाता वाजस्य गोमतः[२०] ॥
उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमाग्नये[२१] ॥
वद्मा हि सूनो अस्यद्मसद्वा चक्रे अग्निर्जनुषाज्मान्नम् ।
स त्वं न ऊर्जसन ऊर्जं धा राजेव जेरवृके क्षेष्यन्तः[२२] ॥
अग्न आयूꣳषि (७) पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम्[२३] ॥
अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत् पोषꣳ रयिं मयि[२४] ॥
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च[२५] ॥
स नः पावक दीदिवोऽग्ने देवाꣳ इहा वह । उप यज्ञꣳ हविश्च नः[२६] ॥

---

( १४।१३ ) अस्मै ते ... ... विचर्षणे । ... ... सुष्टुतिम् ॥ ऋ० ८।४३।२; ( १४।१४ ) ऋ० १०।४५।१; ( १४।१५ ) ऋ० २।७।४; ( १४।१६ ) ... ... रुक्म उर्विया ... ... सुरेताः ॥ ऋ० १०।४५।८; ( १४।१७ ) ... ... युवानं स्वाध्यं ... ... सूदयच्च ॥ ऋ० १।७१।८; (१४।१८) ऋ० ३।१९।३; (१४।१९-२०) ऋ० ५।२३।१-२; ( १४।२१ ) ऋ० ८।४३।११; ( १४।२२ ) ऋ० ६।४।४; ( १४।२३ ) ऋ० ९।६६।१९; ( १४।२४ ) दधद्रयिं मयि पोषम् ॥ ऋ० ९।६६।२१; ( १४।२५ ) ऋ० ५।२६।१; ( १४।२६ ) ऋ० १।१२।१०;

अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः (८) कविः । शुचीरोचत आहुतः[27] ॥
उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतीꣳष्यर्चयः[28] ॥

( पुरुनिष्ठः, पूर्वणीक, भरा,ऽभि वयोभि,-र्यं, आयूꣳषि, विप्रः शुचि,-श्चतुर्दश च १४ ) ॥ १४ ॥

[ देवस्य ११८ । रक्षोहणो १०२ । विभू- ५८ ।- स्त्व १३१ ।- मति ६० । पृथिव्या ११९ । इष ८१ । आदद्दे ९४ । बाक् १०५ । स॒ꣳ७८ । समुद्रꣳ ७६ । हविष्मती- ३४ ।- हृदे ९७ । त्वं ४१४ । चतुर्दश ॥ १४ ॥ १५६१ ॥

[ इति प्रथमकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥ ]

## सुत्यादिने कर्तव्या ग्रहाः ।

[ अथ चतुर्थः प्रपाठकः ॥ ४ ॥ ] चन्द्रऋषिः ।

सोमाभिषवः ॥

आ ददे[1] ग्रावास्यध्वरकृद् देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोमꣳ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिमि[2]न्द्राय त्वा वृत्रघ्न इन्द्राय त्वा वृत्रतुर इन्द्राय त्वाऽभिमातिघ्न इन्द्राय त्वा ऽऽदित्यवत इन्द्राय त्वा विश्वदेव्यावते[3] श्वात्राः स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकं (१) सोमः पिबतु[4] यत्ते सोम दिवि ज्योतिर्यत् पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरु राया कृध्यधि दात्रे वोचो[5] धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं मा वाꣳ हिꣳसिषं मा मा हिꣳसिष्टं[6] प्रागपागुदगधराक्तास्त्वा दिश आ धावन्त्व[7]म्ब नि ष्वर[8] । यत्ते (२) सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा[9] ॥ ( युष्माकं, ते, नव च ९ ) ॥ १ ॥

उपांशुग्रहः ॥

वाचस्पतये पवस्व वाजिन् वृषा वृष्णो अꣳशुभ्यां गभस्तिपूतो देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वा[1] स्वाङ्कृतोऽसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो[2] मनस्त्वाष्टु[3]र्वन्तरिक्षमन्विहि[4] स्वाहा त्वा सुभवः सूर्याय[5] देवेभ्यस्त्वा मरीचिपेभ्य[6] एष ते योनिः प्राणाय त्वा[7] ( वाचः सप्तचत्वारिꣳशत् ४७ ) ॥ २ ॥

अन्तर्यामग्रहः ॥

उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षꣳ सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन् मादयस्व[1] स्वाङ्कृतोऽसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो[2] मनस्त्वाष्टु[3]र्वन्तरिक्षमन्विहि[4] स्वाहा त्वा सुभवः सूर्याय[5] देवेभ्य (१) स्त्वा मरीचिपेभ्य[6] एष ते योनिरपानाय त्वा[7] ॥ ( देवेभ्यः, सप्त च ७ ) ॥ ३ ॥

---

( १४।२७ ) ऋ० ८।४४।२१; ( १४।२८ ) ऋ० ८।४४।१७

ऐन्द्रवायवग्रहः ॥ १ त्रिष्टुप्, २ गायत्री ।

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार ।

उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् ॥

उपयामगृहीतोऽसि वायवे त्वे—

न्द्रवायू इमे सुताः । उप प्रयोभिरा गतमिन्दवो वामुशन्ति हि ॥

उपयामगृहीतोऽसीन्द्रवायुभ्यां त्वैष ते योनिः सजोषाभ्यां त्वा ॥ ( आ त्रिचत्वारिंशत् ४३)॥४॥

मैत्रावरुणग्रहः ॥ गायत्री ।

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतं हवम् ।

उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वैष ते योनिर्ऋतायुभ्यां त्वा ॥ ( अयं विंशतिः २० ) ॥५॥

आश्विनग्रहः ॥ गायत्री ।

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ।

उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा ( याऽष्टादश १८ ) ॥ ६ ॥

प्रातर्युजौ वि मुच्येथामश्विनावेह गच्छतम् । अस्य सोमस्य पीतये ॥

उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिरश्विभ्यां त्वा ॥ ( प्रातर्युजावेकान्नविंशतिः १९ ) ॥ ७ ॥

शुक्रग्रहः ॥ त्रिष्टुप् ।

अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।

इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥

उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाहि ॥ ( अयं पञ्चविंशतिः २५ ) ॥८॥

मन्थिग्रहः ॥ जगती ।

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं सुवर्विदम् ।

प्रतीचीनं वृजनं दोहसे गिराऽऽशुं जयन्तमनु यासु वर्धसे ॥

उपयामगृहीतोऽसि मर्काय त्वैष ते योनिः प्रजाः पाहि ॥ ( तं षड्विंशतिः २६) ॥ ९ ॥

आग्रयणग्रहः ॥ त्रिष्टुप् ।

ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्था—

ऽप्सुषदो महिनैकादश स्थ ते देवा यज्ञमिमं जुषध्वमु—

पयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभिसवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ( ये त्रिचत्वारिंशत् ४३) ॥१०॥

---

( ४।१ ) ऋ० ७।९२।१; ( ४।२ ) ऋ० १।२।४; ( ५।१ ) ऋ० २।४१।४; ( ६।१ ) ऋ० १।२२।३; ( ७।१ ) प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् । ऋ० १।२२।१; ( ८।१ ) ऋ० १०।१२३।१; ( ९।१ ) ...बर्हिषदं स्वर्विदम् । ऋ० ५।४४।१; ( १०।१ ) ये देवासः... । अप्सुक्षितो...ते देवा... ॥ ऋ० १।१३९।११

आतृव्यवन आग्रयणग्रहः ॥ त्रिष्टुप् ।

त्रिꣳशत्त्रयश्च गणिनो रुजन्तो दिवꣳ रुद्राः पृथिवीं च सचन्ते ।
एकादशासो अप्सुषदः सुतꣳ सोमं जुषन्ताꣳ सवनाय विश्वे ॥

उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभिसवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः[1] ॥ ( त्रिꣳशद् द्विचत्वारिꣳशत् ४२ ) ॥११॥

उक्थ्यग्रहः ॥

उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत् त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरिन्द्राय त्वोक्थायुवे[1] (उपयामगृहीतो द्वाविꣳशतिः २२) ॥ १२ ॥

ध्रुवग्रहः ॥ त्रिष्टुप् ।

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् ।
कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥

उपयामगृहीतोऽस्यग्नये त्वा वैश्वानराय ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम एष ते योनिरग्नये त्वा वैश्वानराय[1] ॥ ( मूर्धानं पञ्चत्रिꣳशत् ३५ ) ॥ १३ ॥

ऋतुग्रहाः ॥

मधुश्च[1] माधवश्च[2] शुक्रश्च[3] शुचिश्च[4] नभश्च[5] नभस्यश्च[6]—षश्चो[7]—र्जश्च[8] सहश्च[9] सहस्यश्च[10] तपश्च[11] तपस्यश्चो[12]—पयामगृहीतोऽसि सꣳसर्पोऽस्य[13]ꣳहस्पत्याय त्वा[14] ॥ ( मधुश्च त्रिꣳशत् ३० ) ॥ १४ ॥

ऐन्द्राग्नग्रहः ॥ गायत्री ।

इन्द्राग्नी आ गतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥
उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैषते योनिरिन्द्राग्निभ्यां त्वा ॥ ( इन्द्राग्नी विꣳशतिः २० ) ॥ १५ ॥

वैश्वदेवग्रहः ॥ गायत्री ।

ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वाꣳसो दाशुषः सुतम् ॥
उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः[1] ॥ (ओमासो विꣳशतिः २०) ॥ १६ ॥

पूर्वो मरुत्वतीयग्रहः ॥ त्रिष्टुप् ।

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यꣳ शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम ॥

उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ (मरुत्वन्तꣳ षड्विꣳशतिः २६) ॥ १७ ॥

---

( १३ )... वैश्वानरमृत .... देवाः। ऋ० ६।७।१; (१५) ऋ० ३।१२।१; (१६) ऋ० १।३।७; (१७) ऋ० ३।४७।५, ६।१९।११

उत्तरमरुत्वतीयग्रहः ॥ त्रिष्टुप् ।

इन्द्र॑ मरुत्व इ॒ह पा॑हि॒ सोम॑ं यथा॑ शार्या॒ते अपि॑बः सु॒तस्य॑ ।

तव॒ प्रणी॑ती॒ तव॑ शूर॒ शर्म॒न्ना वि॑वासन्ति क॒वय॑ः सुय॒ज्ञाः ॥

उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा म॒रुत्व॑त ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा म॒रुत्व॑ते[1] ॥ (इन्द्रैकान्नत्रिंशत् २९)

॥ १८ ॥

तृतीयमरुत्वतीयग्रहः ॥ त्रिष्टुप् ।

म॒रुत्वा॑ँ इन्द्र वृष॒भो रणा॑य पिबा॒ सोम॑मनुष्व॒धं मदा॑य ।

आ सि॑ञ्चस्व ज॒ठरे॒ मध्व॑ ऊ॒र्मिं त्वꣳ राजा॑सि प्र॒दिव॑ः सु॒ताना॑म् ॥

उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा म॒रुत्व॑त ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा म॒रुत्व॑ते[1] ॥ (मरुत्वानेकान्नत्रिंशत् २९)

॥ १९ ॥

माहेन्द्रग्रहः ॥ गायत्री ।

म॒हाꣳ इन्द्रो॒ य ओज॑सा प॒र्जन्यो॑ वृष्टि॒माꣳ इ॑व । स्तोमै॑र्व॒त्सस्य॑ वावृधे ॥

उ॒प॒या॒मगृ॑हीतोऽसि म॒हेन्द्रा॑य त्वै॒ष ते॒ योनि॑र्म॒हेन्द्रा॑य त्वा[1] ॥ ( म॒हानेकान्नविꣳशतिः १९ ) ॥२०॥

माहेन्द्रग्रहः ॥ त्रिष्टुप् ।

म॒हाꣳ इन्द्रो॑ नृ॒वदा च॑र्षणि॒प्रा उ॒त द्वि॒बर्हा॑ अ॒मिन॒ः सहो॑भिः ।

अ॒स्म॒द्रि॒यग्वावृधे वी॒र्या॑योरु॒ः पृ॒थुः सुकृ॑तः क॒र्तृभि॑र्भूत् ॥

उ॒प॒या॒मगृ॑हीतोऽसि म॒हेन्द्रा॑य त्वै॒ष ते॒ योनि॑र्म॒हेन्द्रा॑य त्वा[1] ॥ ( म॒हान् षड्विꣳशतिः २६) ॥२१॥

आदित्यग्रहः ॥ १-२ बृहती, ३ त्रिष्टुप् ।

क॒दा च॒न स्त॒रीर॑सि॒ नेन्द्र॑ सश्चसि दा॒शुषे॑ ।

उपो॒पेन्नु म॑घवन् भूय॒ इन्नु॒ ते॒ दान॑ं दे॒वस्य॑ पृच्यते ॥

उ॒प॒या॒मगृ॑हीतोऽस्यादि॒त्येभ्य॑स्त्वा[1] ॥

क॒दा च॒न प्र॒यु॑च्छस्यु॒भे नि पा॑सि॒ जन्म॑नी ।

तुरी॑यादित्य॒ सव॑नं त इन्द्रि॒यमात॑स्थाव॒मृत॑ं दि॒वि[2] ॥

य॒ज्ञो दे॒वाना॒ं प्रत्ये॑ति सु॒म्नमादि॑त्या॒सो भव॑ता मृड॒यन्त॑ः ।

आ वो॒ (१) र्वाची॑ सु॒म॒तिर्व॑वृत्यादꣳहोश्चि॒द्या व॑रिवो॒ वित्त॒रास॑त्[3] ॥

विव॑स्व आदित्यै॒ष ते॑ सोमपी॒थस्तेन॑ मन्दस्व॒ तेन॑ तृप्य तृ॒प्यास्म॑ ते व॒यं त॑र्पयि॒तारो॑[4] या दि॒व्या वृ॒ष्टिस्तया॑ त्वा श्रीणामि[5] ॥ ( वः, सप्तविꣳशतिश्च २७ ) ॥ २२ ॥

---

( १८ ) ऋ० ३।५१।७; ( १९ ) ऋ० ३।४७।१; ( २० ) ऋ० ८।६।१; ( २१ ) अस्मद्र्यग्वावृधे... कर्तृभिर्भूत् ॥ ऋ० ६।१९।१; (२२।१) ऋ० ८।५१ [ ३ वाल० ]। ७; (२२।२) ऋ० ८।५२ [ ४ वाल० ]। ७; (२२।३) ऋ० १।१०७।१

सावित्रग्रहः ॥ त्रिष्टुप् ।

वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥
उपयामगृहीतोऽसि देवाय त्वा सवित्रे[1] ॥ ( वामं चतुर्विꣳशतिः २४ ) ॥ २३ ॥

सावित्रग्रहः ॥ जगती ।

अदब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परि पाहि नो गयम् ।
हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशꣳस ईशत ॥
उपयामगृहीतोऽसि देवाय त्वा सवित्रे[1] ॥ ( अदब्धेभिस्त्रयोविꣳशतिः २३ ) ॥ २४ ॥

सावित्रग्रहः ॥गायत्री ।

हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम् ॥
उपयामगृहीतोऽसि देवाय त्वा सवित्रे[1] ॥ ( हिरण्यपाणिं चतुर्दश १४ ) ॥ २५ ॥

वैश्वदेवग्रहः ॥

सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नम एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः[1] ॥ ( सुशर्मा द्वादश १२ ) ॥ २६ ॥

पात्नीवतग्रहः ॥

बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णाम्यꣳग्ना३इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा[2] ॥ ( बृहस्पतिसुतस्य पञ्चदश १५ ) ॥ २७ ॥

हारियोजनग्रहः ॥

हरिरसि हारियोजनो हर्योः स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य हरिवन्तं ग्रहं गृह्णामि[1] हरीः स्थ हर्योर्धानाः सहसोमा इन्द्राय स्वाहा[2]
( हरिः षड्विꣳशतिः २६ ) ॥ २८ ॥

आग्नेयोऽतिग्रहः ॥ गायत्री ।

अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥
उपयामगृहीतोऽस्यग्नये त्वा तेजस्वत एष ते योनिरग्नये त्वा तेजस्वते[1] ॥ ( अग्ने त्रयोविꣳशतिः २३ ) ॥ २९ ॥

---

( २३।१ ) ऋ० ६।७१।६; ( २४।१ ) ऋ० ६।७१।३; ( २५।१ ) ऋ० १।२२।५; ( २९।१ ) ऋ० ९।६६।१९

ऐन्द्रोऽतिग्रहः ॥ गायत्री ।

उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः । सोममिन्द्र चमू सुतम् ॥
उपयामगृहीतोऽसीन्द्राय त्वौजस्वत एष ते योनिरिन्द्राय त्वौजस्वते ॥ ( उत्तिष्ठन्नेकविंशतिः २१ ) ॥ ३० ॥

सौर्योऽतिग्रहः ॥ गायत्री ।

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् ॥
उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत एष ते योनिः सूर्याय त्वा भ्राजस्वते ॥
( तरणिर्विंशतिः २० ) ॥ ३१ ॥

संगाहनम् ॥ गायत्री ।

आ प्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः । भवा नः सप्रथस्तमः ( आ नव ९ ) ॥३२॥

अवगाहनम् ॥ त्रिष्टुप् ।

ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः ।
अस्माभिरू नु प्रतिचक्ष्याऽभूदो ते यन्ति ये अपरीषु पश्यान् ॥ ( ईयुरेकान्नविंशतिः १९ ) ॥ ३३ ॥

ओषणम् ॥

ज्योतिष्मतीं त्वा सादयामि ज्योतिष्कृतं त्वा सादयामि ज्योतिर्विदं त्वा सादयामि भास्वतीं त्वा सादयामि ज्वलन्तीं त्वा सादयामि मल्मलाभवन्तीं त्वा सादयामि दीप्यमानां त्वा सादयामि रोचमानां त्वा सादयाम्यजस्रां त्वा सादयामि बृहज्ज्योतिषं त्वा सादयामि बोधयन्तीं त्वा सादयामि जाग्रतीं त्वा सादयामि ( ज्योतिष्मतीं षट्त्रिंशत् ३६ ) ॥ ३४ ॥

स्रुवाहुतयः ॥

प्रयासाय स्वाहा[1] ऽऽयासाय स्वाहा[2] वियासाय स्वाहा[3] संयासाय स्वाहो[4]द्यासाय स्वाहा[5] ऽवयासाय स्वाहा[6] शुचे स्वाहा[7] शोकाय स्वाहा[8] तप्यत्वै स्वाहा[9] तपते स्वाहा[10] ब्रह्महत्यायै स्वाहा[11] सर्वस्मै स्वाहा[12] ( प्रयासाय चतुर्विंशतिः २४ ) ॥ ३५ ॥

राजगवीहोमः ।

चित्तं संतानेन[1] भवं यक्ना[2] रुद्रं तनिम्ना[3] पशुपतिं स्थूलहृदयेना[4]ग्निं हृदयेन[5] रुद्रं लोहितेन[6] शर्वं मतस्नाभ्यां[7] महादेवमन्तःपार्श्वेनौ[8]षिष्ठहनं शिङ्गीनिकोश्याभ्याम्
( चित्तमष्टादश १८ ) ॥ ३६ ॥

---

( ३०।१ ) ऋ० ८।७६।१०; ( ३१ ) ऋ० १।५०।४; ( ३२ ) सोम विश्वेभिरंशुभिः । भवा नः सुश्रवस्तमः सखा वृधे ॥ ऋ० १।९१।१७; ( ३३ ) ऋ० १।११३।११

३७-४२ षोडशिग्रहः ॥ ३७-४० अनुष्टुप्।

आ तिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी। अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥
(आ तिष्ठ षड्विꣳशतिः २६) ॥ ३७ (३१) ॥

इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसमृषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥
(इन्द्रं त्रयोविꣳशतिः २३) ॥ ३८ (३२) ॥

असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि।
आ त्वा पृणक्त्विन्द्रियꣳ रजः सूर्यं न रश्मिभिः ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥
(असावि सप्तविꣳशतिः २७) ॥ ३९ (३३) ॥

सर्वस्य प्रतिशीवरी भूमिस्त्वोपस्थ आऽधित।
स्योनास्मै सुषदा भव यच्छास्मै शर्म सप्रथाः ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥
(सर्वस्य षड्विꣳशतिः २६) ॥ ४० (३४) ॥

स्वराडनुष्टुप्।

महाꣳ इन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु।
स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान् द्वेष्टि ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥
(महान् षड्विꣳशतिः २६) ॥ ४१ (३५) ॥

त्रिष्टुप्।

सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहञ्छूर विद्वान्।
जहि शत्रूꣳरप मृधो नुदस्वाऽथाभयं कृणुहि विश्वतो नः ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥
(सजोषास्त्रिꣳशत् ३०) ॥ ४२ (३६) ॥

दक्षिणा ॥ १ गायत्री, २-३ त्रिष्टुप्।

उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम् ॥

---

(३७) ऋ० १।८४।३; (३८) ऋ० १।८४।२; (३९) ... ... रजः सूर्यो न रश्मिभिः ॥ ऋ० १।८४।१; (४१) महाँ इन्द्रो वज्रहस्तः ... यच्छतु। वा० य० २६, १०; (४२) ... ... पिब वृत्रहा शूर विद्वान्। ऋ० ३।४७।२ (४३।१) ऋ० १।५०।१;

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च[२] ॥
अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम[३] ॥
दिवं गच्छ सुवः पत रूपेण (१) वो रूपमभ्यैमि वयसा वयः[५] ।
तुथो वो विश्ववेदा वि भजतु वर्षिष्ठे अधि नाके[६] ॥
एतत् ते अग्ने राध ऐति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्ती[७]—ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यꣳ सुधातुदक्षिणं[८] वि सुवः पश्य व्यन्तरिक्षं यतस्व सदस्यैः[९] (२) रस्मद्दात्रा देवत्रा गच्छत मधुमतीः प्रदातारमा विशतानवहायास्मान् देवयानेन पथेत सुकृतां लोके सीदत तन्नः सꣳस्कृतम्[१०] ॥ (रूपेण, सदस्यैः,—रष्टादश च १८) ॥ ४३ (३७) ॥

समिष्टयजुर्होमः ॥ १–६ त्रिष्टुप् ।

धाता रातिः सवितेदं जुषतां प्रजापतिर्निधिपतिर्नो अग्निः ।
त्वष्टा विष्णुः प्रजया सꣳरराणो यजमानाय द्रविणं दधातु[१] ॥
समिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या ।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानाꣳ सुमत्या यज्ञियानाम्[२] ॥
सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा नो अत्र वरिवः कृणोतु (१) अनु मार्ष्टु तनुवो यद्विलिष्टम्[३] ॥
यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगयाडृधगुताशमिष्ठाः प्रजानन् यज्ञमुपयाहि विद्वान्[४] ॥
स्वगा वो देवाः सदनमकर्म य आजग्म सवनेदं जुषाणाः ।
जक्षिवाꣳसः पपिवाꣳसश्च विश्वेऽस्मे धत्त वसवो वसूनि[५] ॥
यानाऽवह उशतो देव देवान् तान् (२) प्रेरय स्वे अग्ने सधस्थे ।
वहमाना भरमाणा हवीꣳषि वसुं घर्मं दिवमा तिष्ठतानु[६] ॥
यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहैꣳ—ष ते यज्ञो यज्ञपते सहसूक्तवाकः

---

(४३।२) ऋ० १।११५।१; (४३।३) ऋ० १।१८९।१; (४४।१) ... प्रजापतिर्निधिपा देवो अग्निः । ... ... प्रजया सꣳरराणा ... द्रविणं दधात स्वाहा ॥ वा० य० ८।१७; (४४।२) ... सं सूरिभिर्हरिवः सं स्वस्ति । सं ब्रह्मणा देवहितं ... ॥ ऋ० ५।४२।४; वा० य० ८।१५; (४४।३) ... त्वष्टा सुदत्रो विदधातु रायो ... विलिष्टम् ॥ वा० य० ८।१४ (४४।४) ... ... यज्ञे अस्मिन् होताश्चिकित्वोऽवृणीमहीह । ध्रुवमया ध्रुवमुताशमिष्ठाः प्रजानन् विद्वाँ उप याहि सोमम् ॥ ऋ० ३।२९।१६; (४४।५-६) अथर्व० ७।९७।३-४ ।

सुवीरः स्वाहा देवा गातुविदो गातुं विस्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः ॥ ( कृणोतु, तान्-, ष्टाचत्वारिꣳशच्च ४८ ) ॥ ४४ ( ३८ ) ॥

अवभृतः ॥ १-४ त्रिष्टुप्।

उरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित्[१] ॥
शतं ते राजन् भिषजः सहस्रमुर्वी गम्भीरा सुमतिष्टे अस्तु।
बाधस्व द्वेषो निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत्[२] ॥
अभिष्ठितो वरुणस्य पाशो[३]—ऽग्नेरनीकमप आ विवेश।
अपान्नपात् प्रतिरक्षन्नसुर्यं दमेदमे (१) समिधं यक्ष्यग्ने ॥
प्रति ते जिह्वा घृतमुच्चरण्येत् समुद्रे ते हृदयमप्स्वन्तः।
सं त्वा विशन्त्वोषधीरुताऽऽपो यज्ञस्य त्वा यज्ञपते हविर्भिः ॥

सूक्तवाके नमोवाके विधेमा—वभृथ निचङ्कुण निचेरुरसि निचङ्कुणाव देवैर्देवकृतमेनोऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहि[६] सुमित्रा न आप ओषधयः (२) सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मो[७] देवीराप एष वो गर्भस्तं वः सुप्रीतꣳ सुभृतमकर्म देवेषु नः सुकृतो ब्रूतात् प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश एधोऽस्येधिषीमहि[१०] समिदसि[११] तेजोऽसि तेजो मयि धेहि[१२]—

—ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि। पयस्वाꣳ अग्न आ (३) ऽगमं तं मा सꣳ सृज वर्चसा[१३] ॥ ( दमेदम, ओषधय, आ, षट् च ६ ) ॥ ४५ ( ३९ ) ॥

काम्ययाज्यापुरोऽनुवाक्याः ॥ १-२, ४, ८, १० त्रिष्टुप्; ३, ५, ७, ९, ११-१२ गायत्री; ६ अनुष्टुप्।

यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि।
जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम्[१] ॥
यस्मै त्वꣳ सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम्।
अश्विनꣳ स पुत्रिणं वीरवन्तं गोमन्तꣳ रयिं नशते स्वस्ति[२] ॥
त्वे सु पुत्र शवसोऽवृत्रन् कामकातयः। न त्वामिन्द्राति रिच्यते[३] ॥
उक्थउक्थे सोम इन्द्रं ममाद नीथेनीथे मघवानं (१) सुतासः।
यदीꣳ सबाधः पितरं न पुत्राः समानदक्षा अवसे हवन्ते[४] ॥

---

( ४५।१ ) ऋ० १।२४।८; ( ४५।२ ) सहस्रमुर्वी गभीरा.... अस्तु। बाधस्व दूरे......अस्मत् ॥ ऋ० १।२४।९; ( ४५।३-५ ) वा० य० ८,२३-२५; ( ४५।१३ ) आपो अद्या०......समगस्महि। पयस्वानग्न आ गहि...वर्चसा ॥ ( ऋ० १।२३।२३; १०।९।९ ); ( ४६।१ ) ऋ० ५।४।१०; ( ४६।२ ) ऋ० ५।४।११; ( ४६।३ ) ऋ० ८।९२।१४; न त्वामिन्द्राति रिच्यते ॥ ऋ० ८।९२।२२; ( ४६।४ ) ऋ० ७।२६।२।

अग्ने रसेन तेजसा जातवेदो वि रोचसे । रक्षोहाऽमीवचातनः[५] ॥
अपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आऽगमं तं मा सꣳ सृज वर्चसा[६] ॥
वसुर्वसुपतिर्हिकमस्यग्ने विभावसुः । स्याम ते सुमतावपि[७] ॥
त्वामग्ने वसुपतिं वसूनामभि प्र मन्दे (२) अध्वरेषु राजन् ।
त्वया वाजं वाजयन्तो जयेमाभि ष्याम पृत्सुतीर्मर्त्यानाम्[८] ।
त्वामग्ने वाजसातमं विप्रा वर्धन्ति सुष्टुतम् । स नो रास्व सुवीर्यम्[९] ॥
अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयꣳ शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ[१०] ॥
अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः[११] ॥
त्वꣳ ह्यग्ने (३) अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे[१२] ॥
उदग्ने शुचयस्तव[१३] वि ज्योतिषा[१४] ॥ ( मघवानं, मन्दे, ह्यग्ने, चतुर्दश च १४ ) ॥ ४६ (४०) ॥

[आ १०९ । वाच ४७ । उपयामगृहीत ५७ । आ ४३ । ऽयं २० । या १८ । प्रातर्युजा- १९ ।- वयं २५ । तं २६ । ये ४३ । त्रिꣳश- ४२ ।- दुपयामगृहीतो २२ । मूर्धानं ३५ । मधु-३० ।- रिन्द्राग्नी २० । ओमासो २० । मरुत्वन्त २६ ।- मिन्द्र २९ । मरुत्वान् २९ । महान् ११ । महान् २६ । कदा ७७ । वाम- २४ ।- मदब्धेभि- २३ ।- हिरण्यपाणिꣳ १४ । सुशर्मा १२ । बृहस्पति- १५ ।- हरि- २६ ।- रग्ने २३ । उत्तिष्ठन्- २१ ।- तरणि- २० ।- राप्यायस्वे- ९ ।- यु- १९ ।- ज्योतिष्मतीं ३६ । प्रयासाय २४ । चित्त- १८ ।- मातिष्ठे- २६ ।- न्द्र- २३ ।- मसावि २७ ।- सधस्थ २६ । महान् २६ । सजोषा ३० । उ- ११८ ।- द्धातो- १४८ ।- रुं १५६ ।- यः १६४ । ( षट्चत्वारिꣳशत् ॥ ४६ ॥ १८१० ॥ ) ]

[ ॥ इति प्रथमकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥ ]

## पुनराधानम् ।

[ अथ पञ्चमः प्रपाठकः ॥ ५ ॥ ] अग्निर्ऋषिः ।

पुनराधानविधानम् ॥

-देवासुराः संयत्ता आसन्, ते देवा विजयमुपयन्तोऽग्नौ वामं वसु सं न्यदधतेदमु नो भविष्यति यदि नो जेष्यन्तीति, तदग्निर्न्यकामयत तेनापाक्रामत् तद्देवा विजित्यावरुरुत्समाना अन्वायन्, तदस्य सहसाऽदित्सन्त, सोऽरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्वं, यदश्र्वशीयत, तत् (१) रजतꣳ हिरण्यमभवत्, तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजꣳ हि, यो बर्हिषि ददाति, पुराऽस्य संवत्सराद्गृहे रुदन्ति, तस्माद्बर्हिषि न देयꣳ सोऽग्निरब्रवीद्भाग्यसान्यथ व इदमिति पुनराधेयं ते केवलमित्यब्रुवन्नृध्नवत् खलु स इत्य-

---

(४६।६) आपो अद्यान्वचारिषं रसेन समगस्महि । पयस्वानग्न आ गहि ... ... वर्चसा ॥ ऋ० १।२३।२३, १०।९।९; (४६।७) ऋ० ८।४४।२४; (४६।८) ऋ० ५।४।११; (४६।९) ऋ० ५।१३।५; (४६।१०) अयं वाजाञ्जयतु वाजसाताऽयꣳ शत्रूञ्जयतु जर्हृषाणः स्वा हा ॥ वा० य० ५।३७; (४६।११) ऋ० १।१२।६; (४६।१२) ऋ० ८।४३।१४

अब्रवीद्यो मद्देवत्यमग्निमादधाता इति[२] तं पूषाऽऽधत्त तेन (२) पूषाऽऽर्ध्नोत् तस्मात् पौष्णाः पशव उच्यन्ते, तं त्वष्टाऽऽधत्त, तेन त्वष्टाऽऽर्ध्नोत् तस्मात् त्वाष्ट्राः पशव उच्यन्ते, तं मनुराऽधत्त, तेन मनुरार्ध्नोत् तस्मान्मानव्यः प्रजा उच्यन्ते, तं धाता ऽऽधत्त तेन धाताऽऽर्ध्नोत् संवत्सरो वै धाता, तस्मात् संवत्सरं प्रजाः पशवोऽनु प्र जायन्ते[३] य एवं पुनराधेयस्यर्द्धिं वेद (३) ऋध्नोत्येव[४] योऽस्यैवं बन्धुतां वेद, बन्धुमान् भवति[५] भागधेयं वा अग्निराहित इच्छमानः प्रजां पशून् यजमानस्योप दोद्रावोद्वास्य पुनरा दधीत, भागधेयेनैवैनꣳ समर्धयत्यथो शान्तिरेवास्यैषा[६] पुनर्वस्वोरा दधीतैतद्वै पुनराधेयस्य नक्षत्रं यत्पुनर्वसू, स्वायामेवैनं देवतायामाधाय, ब्रह्मवर्चसी भवति[७] दर्भैः (४) रा दधात्ययातयामत्वाय[८] दर्भैरा दधात्यद्भ्य एवैनमोषधीभ्योऽवरुध्या ऽऽ धत्ते[९] पञ्चकपालः पुरोडाशो भवति पञ्च वा ऋतव ऋतुभ्य एवैनमवरुध्या ऽऽ धत्ते[१०] ॥ (अधीयत तत्, तेन, वेद, दर्भैः, पञ्चविꣳशतिश्च २५ ) ॥ १ ॥

याज्याद्यङ्गजातविधानम् ॥

परा वा एष यज्ञं पशून् वपति योऽग्निमुद्वासयते, पञ्चकपालः पुरोडाशो भवति पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनव रुन्धे[१] वीरहा वा एष देवानां योऽग्निमुद्वासयते, न वा एतस्य ब्राह्मणा ऋतायवः पुरान्नमक्षन्, पङ्क्त्यो याज्यानुवाक्या भवन्ति पाङ्क्तो यज्ञः पाङ्क्तः पुरुषो, देवानेव वीरं निरवदायाग्निं पुनरा (१) धत्ते[२] शताक्षरा भवन्ति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति[३] यद्वा अग्निराहितो नर्ध्यते ज्यायो भागधेयं निकामयमानो यदाग्नेयꣳ सर्वं भवति सैवास्यर्द्धिः[४] सं वा एतस्य गृहे वाक् सृज्यते योऽग्निमुद्वासयते स वाचꣳ सꣳसृष्टां यजमान ईश्वरोऽनु पराभवितोर्विभक्तयो भवन्ति वाचो विधृत्यै यजमानस्यापराभावाय[५] (२) विभक्तिं करोति ब्रह्मैव तदकरु[६]पाꣳशु यजति यथा वामं वसु विविदानो गूहति तादृगेव तद[७]ग्निं प्रति स्विष्टकृतं निराह यथा वामं वसु विविदानः प्रकाशं जिगमिषति तादृगेव तद्वि[८]भक्तिमुक्त्वा प्रयाजेन वषट्करोत्यायतनादेव नैति[९] यजमानो वै पुरोडाशः पशव एते आहुती यदभितः पुरोडाशमेते आहुती (३) जुहोति यजमानमेवोभयतः पशुभिः परि गृह्णाति[१०] कृतयजुः संभृतसम्भार इत्याहुर्न सम्भृत्याः सम्भारा न यजुः कर्तव्यमित्य[११]थो खलु सम्भृत्या एव सम्भाराः कर्तव्यं यजुर्यज्ञस्य समृद्ध्यै[१२] पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः पुनरुत्सृष्टोऽनड्वान् पुनराधेयस्य समृद्ध्यै[१३] सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति यत्रयत्रैवास्य न्यक्तं ततः (४) एवैनमव रुन्धे[१४] वीरहा वा एष देवानां योऽग्निमुद्वासयते तस्य वरुण एवर्णयादाग्निवारुणमेकादशकपालमनु निर्वपेद्यं चैव हन्ति यश्चास्यर्णयात्तौ भागधेयेन प्रीणाति नाऽऽर्तिमार्च्छति यजमानः[१५] ॥ ( आ-ऽशासमानाया, ऽऽहुती, ततः, षट्त्रिꣳशच्च ३६ ) ॥ २ ॥

पुनराधानमन्त्राः ॥ १ उपरिष्टाद्बृहती: २-४, ९-१० गायत्री; ५-६ अनुष्टुप्; ७-८; त्रिष्टुप् ।

भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा ।
उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायाऽऽदधे[१] ॥
आऽयं गौः पृश्निरक्रमीदसनन्मातरं पुनः । पितरं च प्रयन्त्सुवः[२] ॥
त्रिꣳशद्धाम वि राजति वाक् पतङ्गाय शिश्रिये । प्रत्यस्य वह द्युभिः[३] ॥
अस्य प्राणादपानत्यन्तश्चरति रोचना । व्यख्यन्महिषः सुवः[४] ॥
यत् त्वा (१) क्रुद्धः परोवप मन्युना यदवर्त्या ।
सुकल्पमग्ने तत् तव पुनस्त्वोद्दीपयामसि[५] ॥
यत् ते मन्युपरोप्तस्य पृथिवीमनु दध्वसे । आदित्या विश्वे तद् देवा वसवश्च समाभरन्[६] ॥
मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु ।
बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम्[७] ॥
सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त (२) ऋषयः सप्त धाम प्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्वा घृतेन[८] ॥
पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा । पुनर्नः पाहि विश्वतः[९] ।
सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परि[१०] ॥

लेकः सलेकः सुलेकस्ते न आदित्या आज्यं जुषाणा वियन्तु[११] केतः सकेतः सुकेतस्ते न (३) आदित्या आज्यं जुषाणा वियन्तु[१२] विवस्वाꣳ अदितिर्देवजूतिस्ते न आदित्या आज्यं जुषाणा वियन्तु[१३] ॥ (त्वा, सप्त, न,-त्रयोदश च १३) ॥ ३ ॥

पूर्वोक्तमन्त्राणां व्याख्यानम् ॥

भूमिर्भूम्ना द्यौर्वरिणेत्याहाऽऽशिषैवैनमा धत्ते[१] सर्पा वै जीर्यन्तोऽमन्यन्त स एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यत् ततो वै ते जीर्णास्तनूरपाघ्नत सर्पराज्ञिया ऋग्भिर्गार्हपत्यमा दधाति पुनर्नवमेवैनमजरं कृत्वा ऽऽ धत्तेऽथो पूतमेव[२] पृथिवीमन्नाद्यं नोपानमत्सैतं (१) मन्त्रमपश्यत् ततो वै तामन्नाद्यमुपानम-

(३।१) भूर्भुवः स्वर्द्यौरिव भूम्ना पृथिवीव वरिम्णा ।
तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्नि० ... ... दधे ॥ वा० य० ३।५
(३।२) ... ... पृश्निरक्रमीदसदन्मातरं पुरः । ... ... प्रयन्त्स्वः ॥ ऋ० १०।१८९।१
(३।३) ... ... पतङ्गाय धीयते । प्रति वस्तोरह द्युभिः ॥ ऋ० १०।१८९।३
(३।४) अन्तश्चरति रोचनाऽस्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥ ऋ० १०।१८९।२
(३।५) यत्त्वा ... ... मन्युना सुमनस्तर । मै० सं० १।७।१
(३।६) ... ... वसवश्च पुनराभरन् ॥ मै० सं० १।७।२
(३।७) ... ... जुषतामाज्यस्य ... ... । इमꣳ यज्ञꣳ सप्ततन्तुं ततं न आ देवा यन्तु सुमनस्यमानाः ॥
मै० सं० १।७।६; (३।८) वा० य० १७।७९, (३।९) ..... विश्वप्स्न्या विश्वतस्परि ॥ वा० य० १२।१०।

यत् सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधात्यन्नाद्यस्यावरुध्या अथो अस्यामेवैनं प्रतिष्ठितमा धत्ते[3] यत्त्वा क्रुद्धः परोवपेत्याहापह्नुत एवास्मै तत् पुनस्त्वोद्दीपयामसीत्याह समिन्ध एवैनं[5] यत्ते मन्युपरोप्तस्येत्याह देवताभिरेव (२) एनꣳ सं भरति[6] वि वा एतस्य यज्ञश्छिद्यते योऽग्निमुद्वासयते बृहस्पतिवत्यर्चोप तिष्ठते ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सं दधाति[7] विच्छिन्नं यज्ञꣳ समिमं दधात्वित्याह सन्तत्यै[8] विश्वे देवा इह मादयन्तामित्याह सन्तत्यैव यज्ञं देवेभ्योऽनु दिशति[9] सप्त ते अग्ने समिधः सप्त जिह्वाः (३) इत्याह सप्तसप्त वै सप्तधाऽग्नेः प्रियास्तनुवस्ता एवाव रुन्धे[10] पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुती जुहोति यजमानमेवोर्जा च रय्या चोभयतः परि गृह्णात्या[11]दित्या वा अस्माल्लोकादमुं लोकमायन्तेऽमुष्मिँल्लोके व्यतृष्यन्त इमं लोकं पुनरभ्यवेत्याग्निमाधायैतान् (४) होमानजुहवुस्त आर्ध्नुवन् ते सुवर्गँल्लोकमायन् यः पराचीनं पुनराधेयादग्निमादधीत स एतान् होमाञ्जुहुयाद्यामेवाऽऽदित्या ऋद्धिमार्ध्नुवन् तामेवर्ध्नोति[12] ॥

( एत-,मेव, जिह्वा, एतान्, पञ्चविꣳशतिश्च २५ ) ॥ ४ ॥

आहवनीयोपस्थानम् ॥ १-३, ७-१२ गायत्री, ४ जगती, ५ त्रिष्टुप्, ६ अनुष्टुप् ।

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते[1] ॥
अस्य प्रत्नामनु द्युतꣳ शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम्[2] ॥
अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति[3] ॥
अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभुवं विशेविशे[4] ॥
उभा वामिन्द्राग्नी आहुवध्या (१) उभा राधसः सह मादयध्यै ।
उभा दातारविषाꣳ रयीणामुभा वाजस्य सातये हुवे वाम्[5] ॥
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आ रोहाथा नो वर्धया रयिम्[6] ॥
अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम्[7] ॥
अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत्पोषꣳ रयिं (२) मयि[8] ॥
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च[9] ॥
स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽऽवह । उप यज्ञꣳ हविश्च नः[10] ॥

---

(५।१) ऋ० १।७४।१; (५।२) ऋ० ९।५४।१; (५।३) ऋ० ८।४४।१६; (५।४) ... ... विभ्वं विशे विशे ॥ ऋ० ४।७।१; (५।५) ऋ० ६।६०।१३; (५।६) ... ... जानन्नग्न आ सीदाथा ... ... वर्धया गिरः ॥ ऋ०३।२९।१०; (५।७) ऋ० ९।६६।१९; (५।८) ......दधद्रयिं मयि पोषम् ॥ ऋ० ९।६६।२१; (५।९) ऋ० ५।२६।१, (५।१०) ऋ० १।१२।१०

अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः[११] ॥
उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतीꣳष्यर्चयः[१२] ॥

आयुर्दा अग्नेऽस्यायुर्मे (३) देहि[१३] वर्चोदा अग्नेऽसि वर्चो मे देहि[१४] तनूपा अग्नेऽसि तनुवं मे पाह्य[१५]ग्ने यन्मे तनुवा ऊनं तन्म आ पृण[१६] चित्रावसो स्वस्ति ते पारमशीये[१७]न्धानास्त्वा शतꣳ हिमा द्युमन्तः समिधीमहि वयस्वन्तो वयस्कृतं यशस्वन्तो यशस्कृतꣳ सुवीरासो अदाभ्यम्। अग्ने सपत्नदम्भनं वर्षिष्ठे अधि नाके[१८] ॥

सं त्वमग्ने सूर्यस्य वर्चसा (४) ऽगथाः समृषीणाꣳ स्तुतेन सं प्रियेण धाम्ना ।
त्वमग्ने सूर्यवर्चा असि सं मामायुषा वर्चसा प्रजया सृज[१९] ॥

( आहुतस्यै, रयिं, मे, वर्चसा, सप्तदश च १७ ) ॥ ५ ॥

गार्हपत्यस्य पुनरप्याहवनीयस्य चोपस्थानम् ॥ १, ५-७, १२-१३ गायत्री, ९-१० द्विपदा विराट्, १४ बृहती, १५ अनुष्टुप् ।

सं पश्यामि प्रजा अहमिडप्रजसो मानवीः । सर्वा भवन्तु नो गृहे[१] ॥

अम्भः स्थाम्भो वो भक्षीय महः स्थ महो वो भक्षीय सहः स्थ सहो वो भक्षीयोर्जः स्थोर्जं वो भक्षीय[२] रेवती रमध्वमस्मिँल्लोकेऽस्मिन् गोष्ठेऽस्मिन् क्षयेऽस्मिन् योनाविहैव स्तेतो माऽप गात बह्वीर्मे भूयास्त[३] (१) सꣳहितासि विश्वरूपीरा मोर्जा विशाऽऽ गौपत्येनाऽऽ रायस्पोषेण सहस्रपोषं वः पुष्यासं मयि वो रायः श्रयन्ताम्[४] ॥

उप त्वाऽग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि[५] ॥
राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानꣳ स्वे दमे[६] ॥
स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये[७] ॥
अग्ने (२) त्वं नो अन्तमः । उत त्राता शिवो भव वरूथ्यः[८] ॥
तं त्वा शोचिष्ठऽदीदिवः । सुम्नाय नूनमीमहे सखिभ्यः[९] ॥
वसुरग्निर्वसुश्रवाः । अच्छा नक्षि द्युमत्तमो रयिं दाः[१०] ॥

ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यतेडाः स्थ मधुकृतः स्योना मा ऽऽ विशतेरा मदः । सहस्रपोषं वः पुष्यासं (३) मयि वो रायः श्रयन्ताम्[११] ॥

तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्[१२] ॥

---

( ५।११-१२ ) ऋ० ८।४४।२१, १७; ( ५।१९ ) ... ... धाम्ना । समहमायुषा सं वर्चसा सं प्रजया सꣳ रायस्पोषेण ग्मिषीय ॥ वा० य० ३।१९; ( ६।१ ) मै० सं० १।५।३२; ( ६।५-७ ) ऋ० १।१।७-९; ( ६।८-१० ) ऋ० ५।२४।१,४,२; ( ६।१२ ) ऋ० ३।६२।१०

सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजम्[13] ॥
कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते[14] ॥
परि त्वाग्ने पुरं वयं विप्रꣳ सहस्य धीमहि।
धृषद्वर्णं (४) दिवेदिवे भेत्तारं भङ्गुरावतः[15] ॥

अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳ हिमास्तामाशिषमा शासे तन्तवे ज्योतिष्मतीं तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीम्[16] ॥
( भूयास्त,स्वस्तयेऽग्ने, पुष्यासं,धृषद्वर्ण-,मेकान्नत्रिꣳशच्च २९ ) ॥ ६ ॥

पञ्चमानुवाकोक्तमन्त्राणां व्याख्यानम् ॥

अयज्ञो वा एष योऽसामोपप्रयन्तो अध्वरमित्याह स्तोममेवास्मै युनक्त्यु[1]पेत्याह प्रजा वै पशव उपेमं लोकं प्रजामेव पशूनिमं लोकमुपैत्य[2]स्य प्रत्नामनुद्युतमित्याह सुवर्गो वै लोकः प्रत्नः सुवर्गमेव लोकꣳ समारोहत्य[3]ग्निर्मूर्धा दिवः ककुदित्याह मूर्धानमे (१) वैनꣳ समानानां करोत्यथो देवलोकादेव मनुष्यलोके प्रतितिष्ठत्य[4]यमिह प्रथमो धायि धातृभिरित्याह मुख्यमेवैनं करोत्यु[5]भा वामिन्द्राग्नी आहुवध्या इत्याहौजो बलमेवाव रुन्धे[6]ऽयं ते योनिर्ऋत्विय इत्याह पशवो वै रयिः पशूनेवाव रुन्धे[7] षड्भिरुप तिष्ठते षड्वै (२) ऋतव ऋतुष्वेव प्रति तिष्ठति षड्भिरुत्तराभिरुप तिष्ठते द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति[8] यथा वै पुरुषोऽश्वो गौर्जीर्यत्येवमग्निराहितो जीर्यति संवत्सरस्य परस्तादाग्निपावमानीभिरुप तिष्ठते पुनर्नवमेवैनमजरं करोत्यथो पुनात्येवोप[9] तिष्ठते योग एवास्यैष उप तिष्ठते (३) दम एवास्यैष उप तिष्ठते याच्ञैवास्यैषोप तिष्ठते यथा पापीयाञ्छ्रेयस आहृत्य नमस्यति तादृगेव तदा[10]युर्दा अग्नेऽस्यायुर्मे देहीत्याहाऽऽयुर्दा ह्येष वर्चोदा अग्नेऽसि वर्चो मे देहीत्याह वर्चोदा ह्येष तनूपा अग्नेऽसि तनुवं मे पाहीत्याह (४) तनूपा ह्येषो[11]ऽग्ने यन्मे तनुवा ऊनं तन्म आ पृणेत्याह यन्मे प्रजायै पशूनामूनं तन्म आ पूरयेति वावैतदाह[12] चित्रावसो स्वस्ति ते पारमशीयेत्याह रात्रिर्वै चित्रावसुरव्युष्टयै वा एतस्यै पुरा ब्राह्मणा अभैषुर्व्युष्टिमेवाव रुन्धे[13] इन्धानास्त्वा शतं (५) हिमा इत्याह शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्ये[14]षा वै सूर्मी कर्णकावत्येतया ह स्म वै देवा असुराणाꣳ शततर्हाꣳस्तृꣳहन्ति यदेतया समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय प्रहरति स्तृत्या अछम्बट्कारꣳ सं त्वमग्ने सूर्यस्य वर्चसा गथा इत्याहैतत्त्वमसीदमहं (६) भूयासमिति वावैतदाह[16] त्वमग्ने सूर्यवर्चा असीत्याहाऽऽशिषमेवैतामा शास्ते[17] ( मूर्धानं, वै, तिष्ठत, आह, शत-,महꣳ, षोडश च १६ ) ॥ ७ ॥

---

(६।१३)... य औशिजः ॥ ऋ० १।१८।१; (६।१४) ऋ० ८।५१ [३ वाल०] । ७; (६।१५) ... दिवेदिवे हन्तारं भङ्गुरावताम् ॥ ऋ० १०।८७।२२

षष्ठानुवाकोक्तमन्त्राणां व्याख्यानम् ।

सं पश्यामि प्रजा अहमित्याह यावन्त एव ग्राम्याः पशवस्तानेवाव रुन्धे[1] ऽम्भः स्थाम्भो वो भक्षीयेत्याहाम्भो ह्येता महः स्थ महो वो भक्षीयेत्याह महो ह्येताः सह स्थ सहो वो भक्षीयेत्याह सहो ह्येता ऊर्जस्थोर्जं वो भक्षीयेत्या (१) होर्जो ह्येता[2] रेवती रमध्वमित्याह पशवो वै रेवतीः पशूनेवात्मन् रमयत[3] इहैव स्तेतो माऽप गातेत्याह ध्रुवा एवैना अनपगाः कुरुत[4] इष्टकचिद्वा अन्योऽग्निः पशुचिदन्यः सꣳहितासि विश्वरूपीरिति वत्समभि मृशत्युपैवैनं धत्ते पशुचितमेनं कुरुते[5] प्र (२) वा एषोऽस्माल्लोकाच्च्यवते य आहवनीयमुप तिष्ठते गार्हपत्यमुप तिष्ठतेऽस्मिन्नेव लोके प्रति तिष्ठत्यथो गार्हपत्यायैव नि ह्नुते[6] गायत्रीभिरुप तिष्ठते तेजो वै गायत्री तेज एवात्मन् धत्तेऽथो यदेतं तृचमन्वाह सन्तत्यै[7] गार्हपत्यं वा अनु द्विपादो वीराः प्रजायन्ते य एवं विद्वान् द्विपदाभिर्गार्हपत्यमुप तिष्ठत (३) आस्य वीरो जायत[8] ऊर्जा वः पश्याम्यूर्जा मा पश्यतेत्याहाऽऽशिषमेवैतामा शास्ते[9] तत्सवितुर्वरेण्यमित्याह प्रसूत्यै सोमानꣳ स्वरणमित्याह सोमपीथमेवाव रुन्धे कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवाव रुन्धे[10] कदा चन स्तरीरसीत्याह न स्तरीꣳ रात्रिं वसति (४) य एवं विद्वानग्निमुप तिष्ठते[11] परि त्वाग्ने पुरं वयमित्याह परिधिमेवैतं परि दधात्यस्कन्दाया[12]ग्ने गृहपत इत्याह यथायजुरेवैत[13]च्छतꣳ हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह[14] पुत्रस्य नाम गृह्णात्यन्नादमेवैनं करोति[15] तामाशिषमा शासे तन्तवे ज्योतिष्मती (५) मिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो जातः स्यात् तेज एवास्मिन् ब्रह्मवर्चसं दधाति[16] ॥ (ऊर्जं वो भक्षीयेति, प्र, गार्हपत्यमुप तिष्ठते, वसति, ज्योतिष्मती-, मेकान्नत्रिꣳशच्च २९) ॥ ८ ॥

पूर्वोक्तोपस्थानस्याग्निहोत्राङ्गता ॥

अग्निहोत्रं जुहोति यदेव किं च यजमानस्य स्वं तस्यैव तद्रे[1]तः सिञ्चति प्रजनने प्रजननꣳ हि वा अग्नि[2]रथौषधीरन्तगता दहति तास्ततो भूयसीः प्रजायन्ते[3] यत्सायं जुहोति रेत एव तत्सिञ्चति प्रैव प्रातस्तनेन जनयति[4] तद्रेतः सिक्तं न त्वष्ट्राऽविकृतं प्रजायते यावच्छो वै रेतसः सिक्तस्य (१) त्वष्टा रूपाणि वि करोति तावच्छो वै तत्प्रजायत एष वै दैव्यस्त्वष्टा यो यजते बह्वीभिरुप तिष्ठते रेतस एव सिक्तस्य बहुशो रूपाणि वि करोति स[5] प्रैव जायते श्वःश्वो भूयान् भवति य एवं विद्वानग्निमुप तिष्ठते[6] ऽहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत्तेन सह (२) रात्रिं प्राविशन् ते देवा हीना अमन्यन्त तेऽपश्यन्नाग्नेयी रात्रिराग्नेयाः पशव इममेवाग्निꣳ स्तवाम स नः स्तुतः पशून् पुनर्दास्यतीति तेऽग्निमस्तुवन्त्स एभ्यः स्तुतो रात्रिया अध्यहरभि पशून्निरार्जत् ते देवाः पशून् वित्त्वा कामाꣳ अकुर्वत य एवं विद्वानग्निमुप तिष्ठते पशुमान्

भवत्या— (३) दित्यो वा अस्माँल्लोकादमुं लोकमैत् सोऽमुं लोकं गत्वा पुनरिमं लोकमभ्यध्यायत् स इमं लोकमागत्य मृत्योरबिभेन्मृत्युसंयुत इव ह्ययं लोकः सोऽमन्यतेममेवाग्निꣳ स्तवानि स मा स्तुतः सुवर्गं लोकं गमयिष्यतीति सोऽग्निमस्तौत् स एनꣳ स्तुतः सुवर्गं लोकमगमयद्य (४) एवं विद्वानग्निमुप तिष्ठते सुवर्गमेव लोकमेति सर्वमायुरेत्य—भि वा एषोऽग्नी आ रोहति य एना-वुप तिष्ठते यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति[१] नक्तमुप तिष्ठते न प्रातः सꣳ हि नक्तं व्रतानि सृज्यन्ते सह श्रेयाꣳश्च पापीयाꣳश्चासाते ज्योतिर्वा अग्निस्तमो रात्रिर्य (५) न्नक्तमुप तिष्ठते ज्योतिषैव तमस्तरत्यु—पस्थेयोऽग्नी३र्नोपस्थेया३ इत्याहुर्मनुष्यायेन्वै योऽहर-हराहृत्याथैनं याचति स इन्न्वै तमुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयो[११] ऽथो खल्वाहुराशिषे वै कं यजमानो यजत इत्येषा खलु वा (६) आहिताग्नेराशीर्यदग्निमुप तिष्ठते तस्मादुपस्थेयः[१२] प्रजापतिः पशूनसृजत ते सृष्टा अहोरात्रे प्राविशन् ताञ्छन्दोभिरन्वविन्दद्यच्छ-न्दोभिरुप तिष्ठते स्वमेव तदन्विच्छति[१३] न तत्र जाम्यस्तीत्याहुर्योऽहरहरुप तिष्ठत इति[१४] यो वा अग्निं प्रत्यङ्ङुप तिष्ठते प्रत्येनमोषति यः पराङ् विष्वङ् प्रजाया पशुभि (७) रेति कवातिर्यङ्ङि-वोपतिष्ठेत नैनं प्रत्योषति न विष्वङ् प्रजया पशुभिरेति[१५] ( सिक्तस्य. सह, भवति, यो, य,-खलुवै, पशुभि-, त्रयोदश च १३) ॥९॥

प्रवत्स्यतो यजमानस्याग्नेरुपस्थानमन्त्रा', आचमनम्, कपालानुमन्त्रणादि च । १,२,६,९ त्रिष्टुप्; ३ विपरीता बृहती; ४ शङ्कुमत्यनुष्टुप्; ५,७,११ अनुष्टुप्; १२ विराट्स्थाना; ८ द्विपदा ।

मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे ।
तत्त्वं बिभृहि पुनरा मदेतोस्तवाहं नाम बिभराण्यग्ने[१] ॥
मम नाम तव च जातवेदो वाससी इव विवसानौ ये चराव: ।
आयुषे त्वं जीवसे वयं यथायथं वि परि दधावहै पुनस्ते[२] ॥
नमोऽग्नयेऽप्रतिविद्धाय नमोऽनाधृष्टाय नमः सम्राजे ।
अषाढो (१) ऽग्निर्बृहद्वया विश्वजित्सहन्त्यः श्रेष्ठो गन्धर्वः[३] ॥
त्वत्पितारो अग्ने देवास्त्वामाहुतयस्त्वद्विवाचनाः ।
सं मामायुषा सं गौपत्येन सुहिते मा धाः ॥
अयमग्निः श्रेष्ठतमोऽयं भगवत्तमोऽयꣳ सहस्रसातमः । अस्मा अस्तु सुवीर्यम्[४] ॥

---

( १०११ )...जातवेदो माता पिता च दधतुर्न्वग्रे। तत्त्वं गोपाया पुनर्ददै ते वयं बिभराम तव नाम ॥ काठ० सं० ७।१२;
(१०१२) मम च माम तव जातवेदो... । ते बिभृवो दक्षसे जीवसे च यथायथं नौ तन्वौ जातवेदः ॥ काठ० सं० ७।२५;
( १०१५ ) . अयमस्तु यशस्तमः । अथँ सहस्रसातमस्सुकृतं योनिमासदत् ततो वरान् वृणीमहे ॥ काठ० सं० ७।८२;

मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु ।
या इष्टा उषसो निम्रुचश्च ताः सं दधामि हविषा घृतेन[६] ॥
पयस्वतीरोषधयः ( २ ) पयस्वद्वीरुधां पयः । अपां पयसो यत्पयस्तेन मामिन्द्र सꣳसृज[७] ॥
अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्[८] ॥
अग्निꣳ होतारमिह तꣳ हुवे देवान् यज्ञियानिह यान् हवामहे ।
आ यन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य[९] ॥
कस्त्वा युनक्ति स त्वा युनक्तु[१०] यानि घर्मे कपालान्युपचिन्वन्ति ( ३ ) वेधसः ।
पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम्[११] ॥
अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन् पुनः ।
इध्मो वेदिः परिधयश्च सर्वे यज्ञस्याऽऽयुरनु सं चरन्ति[१२] ॥
त्रयस्त्रिꣳशत्तन्तवो ये वितत्निरे य इमं यज्ञꣳ स्वधया ददन्ते तेषां छिन्नं प्रत्येतद्दधामि स्वाहा घर्मो देवाꣳ अप्येतु[१३] ॥ ( अषाढ, ओषधय, उपचिन्वन्ति, पञ्चचत्वारिꣳशच्च ४५ ) ॥ १० ॥

काम्या याज्यापुरोऽनुवाक्याः ॥ १-२,१३,१५,१७,२० गायत्री; ३,७ जगती; ४-६, ८-१०, १२, १४, १६, १८-१९ त्रिष्टुप्; ११ अनुष्टुप् ।

वैश्वानरो न ऊत्याऽऽ प्र यातु परावतः । अग्निरुक्थेन वाहसा[१] ॥
ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे[२] ॥
वैश्वानरस्य दꣳसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः ।
उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा[३] ॥
पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश ।
वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स ( १ ) रिषः पातु नक्तम्[४] ॥
जातो यदग्ने भुवना व्यख्यः पशुं न गोपा इर्यः परिज्मा ।
वैश्वानर ब्रह्मणे विन्द गातुं यूयं पात स्वस्तिभिः सदा नः[५] ॥
त्वमग्ने शोचिषा शोशुचान आ रोदसी अपृणा जायमानः ।
त्वं देवाꣳ अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महित्वा[६] ॥

---

(१०।६) मनो......०तामाज्यस्य......दधातु। मै० सं० १।७।६; उषसो याश्च याज्यास्ताः...मनसा घृतेन ॥ मै० सं० १।७।७; (१०।७) ..पयस्वन्मामकं वचः । अपां पयस्वदित् पयस्तेन मा सह शुन्धत ॥ ऋ० १०।१७।१४; (१०।८) वा० य० १।५; (१०।९)... अग्निँ होतारमुप...यान् यजामहे । व्यन्तु देवा हविषो मे अस्या देवा यन्तु सुमनस्यमानाः । मै० सं० १।४।३; (१०।११) मै० सं० १।१।८; (१०।१३)... तन्तवो यँ वितन्वत इमं च यज्ञँ सुधया ददन्ते । तेभिश्छिन्नमपिदधमो यदत्र स्वाहा यज्ञो अप्येतु देवान् ॥ मै० सं० १।४।१; (११।१)...न ऊतय आ प्र यातु...वाहसा । वा० य० २६।८; (११।२) वा० य० २६।६; (११।३) ऋ० ३।३।११; (११।४) ऋ० १।९८।२; (११।५) व्यख्यः पशून न...॥ ऋ० ७।१३।३; (११।६) ऋ० ७।१३।२

दशमेऽहन् वामदेव्यं योनेश्च्यवते यद्दशमेऽहन् गृह्यन्ते प्राणेभ्य एव तत् प्रजा न यन्ति ॥
( तत्, प्राणग्रहाः, सप्तत्रिंशच्च ३७ ) ॥१०॥

पाशुकहौत्रोपयोगिमन्त्राः ॥ गायत्री; २-४ अनुष्टुप्; ६-८,२१ त्रिष्टुप्।

प्र देवं देव्या धिया भरता जातवेदसम्। हव्या नो वक्षदानुषक्[1] ॥
अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते। रथो न योरभीवृतो घृणीवान् चेतति त्मना[2] ॥
अयमग्निरुरुष्यत्यमृतादिव जन्मनः। सहसश्चित् सहीयान् देवो जीवातवे कृतः[3] ॥
इडायास्त्वा पदे वयं नाभा पृथिव्या अधि। जातवेदो नि धीमह्यग्ने हव्याय वोढवे[4] ॥
अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः सीद योनिम्।
कुलायिनं घृतवन्तं सवित्रे यज्ञं नय यजमानाय साधु[5] ॥
सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञं सुकृतस्य योनौ।
देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः[6] ॥
नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत् सुदक्षः।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः[7] ॥
त्वं दूतस्त्व-( २ )-मु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता।
अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन् दीद्यद्बोधि गोपाः[8] ॥
अभि त्वा देव सवितरीशानं वार्याणाम्। सदाऽवन् भागमीमहे[9] ॥
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतां नो भरीमभिः[10] ॥
त्वामग्ने पुष्कराद्ध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः[11] ॥
तमु (३) त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः। वृत्रहणं पुरन्दरम्[12] ॥
तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम्। धनञ्जयꣳ रणेरणे[13] ॥

---

( ११।१ ) ऋ० १०,१७६,२; मै० ४,१०,९१; १३,१; काठ० १५,४३। ( ११।२ ) ऋ० १०,१७६,३; मै० ४,१०,९२; काठ० १५,४४। ( ११।३ ) ऋ० १०,१७६,४; मै० ४,१०,९३; काठ० १५, ४५। ( ११।४ ) ऋ० ३,२९,४; वा० य० ३४,१५; मै० १,६,२४,४६; ४,१०,९४; ११,२७; काठ० १५,४६। ( ११।५ ) ऋ० ६,१५,१६; मै० ४,१०,९५; काठ० १५,४७। ( ११।६ ) ऋ० ३,२९,८; वा० य० ११,३५; मै० २,७,३८; ३,८,५; काठ० १६, ३१। ( ११।७ ) ऋ० २,९,१; वा० य० ११,३६; मै० २,७,३९; काठ० १६,३२। ( ११।८ ) ऋ० २,९,२; मै० ४,१०,९७; काठ० १५,४९। ( ११।९ ) ऋ० १,२४,३; मै० ४,१०,६३; १३,९; काठ० १५,५६। ( ११।१० ) ऋ० १,२२,१३; वा० य० ८,३२; मै० २,७,२२५; काठ० १३,२७। ( ११।११ ) ऋ० ६,१६,१३; वा० य० ११,३२; १५,२२; सा० ९; मै० २,७,३५; काठ० १६,२८। ( ११।१२ ) ऋ० ६,१६,१४; वा० य० ११,३३; मै० २,७,३६; काठ० १६,२९। ( ११।१३ ) ऋ० ६,१६,१५; वा० य० ११,३४; मै० २,७,३७; काठ० १६,३०।

उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाऽजनि । धनञ्जयो रणेरणे[१४] ॥
आ यꣳ हस्ते न खादिनꣳ शिशुं जातं न बिभ्रति । विशामग्निꣳ स्वध्वरम्[१५] ॥
प्र देवं देववीतये भरता वसुवित्तमम् । आ स्वे योनौ नि षीदतु[१६] ॥
आ (४) जातं जातवेदसि प्रियꣳ शिशीतातिथिम् । स्योन आ गृहपतिम्[१७] ॥
अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः[१८] ॥
त्वꣳ ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे[१९] ॥
तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनम्[२०] ॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्ते यत्र (५) पूर्वे साध्याः सन्ति देवाः[२१] ॥

( वोढवे, त्वं, त,-न्वा, यत्र चत्वारि च ४ ) ॥११॥

[ पूर्ण-२२५ ।-षैयो ७३० । ऽग्निना ९६ । ये १९३ । सूर्यः १५१ । सं १३० । वषट्कार १६७ । उपयामगृहीतो ६४ । यां १४३ । त्वे १३७ । प्रै–२५४ । (–कादश ॥११॥ १७९० ) ]

[ ॥ इति तृतीयकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥ ]

[ प्रजापति–२२४८ ।–यों वा २३३५ । अग्ने १८५७ । वि वै २३९२ । पूर्णा १७९० । ( पञ्च ॥ ५ ॥ १०६२२ ) ]

॥ इति तृतीयं काण्डं सम्पूर्णम् ॥ ३ ॥

---

( ११।१४ ) ऋ० १,७४,३; सा० १३,८१; मै० ४,१०,६५; काठ० ८,५६ । ( ११।१५ ) ऋ० ६,१६,४०; मै० ४,१०,६६; काठ० १५,५८ । ( ११।१६ ) ऋ० ६,१६,४१; मै० ४,१०,६७; काठ० १५,५९ । ( ११।१७ ) ऋ० ६,१६,४२; मै० ४,१०,६८; काठ० १५,६० । ( ११।१८ ) ऋ० १,१२,६; सा० ८४४; मै० ४,१०,३९; काठ० १५,६१; ३४,३१ । ( ११।१९ ) ऋ० ८,४३,१४; मै० ४,१०,५१, काठ० १५,६२ । ( ११।२० ) ऋ० ८,८४,८; मै० ४,१०,७०; काठ० १५,६३ । ( ११।२१ ) ऋ० १,१६४,५०; १०,९०,१६; वा० य० ३१,१६; अथर्व० ७,५,१; मै० ४,१०,७१; १४,३२; काठ० १५,६४ ।

# अथ चतुर्थं काण्डम्।

## अग्निचित्यङ्गमन्त्रपाठाभिधानम्।

[ अथ प्रथमः प्रपाठकः ॥ १ ॥ ] अग्निर्ऋषिः।

अभ्र्यादानम् ॥ ३,९ गायत्री; १-२,१३ अनुष्टुप्; ५ त्रिष्टुप्; ४,६ जगती।

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः। अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याऽभरत् [१] ॥
युक्त्वाय मनसा देवान्त्सुवर्यतो धिया दिवम्।
बृहज्ज्योतिः करिष्यतः सविता प्र सुवाति तान् [२] ॥
युक्तेन मनसा वयं देवस्य सवितुः सवे। सुवर्गेयाय शक्त्यै [३] ॥
युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः।
वि होत्रा दधे वयुनाविदेक इ-(१)-न्मही देवस्य सवितुः परिष्टुतिः [४] ॥
युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोका यन्ति पथ्येव सूराः।
शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः [५] ॥
यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमर्चतः।
यः पार्थिवानि विममे स एतशो रजाꣳसि देवः सविता महित्वना [६] ॥
देव सवितः प्र सुव यज्ञं प्र सुव (२) यज्ञपतिं भगाय दिव्यो गन्धर्वः।
केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः [७] ॥
इमं नो देव सवितर्यज्ञं प्र सुव देवायुवꣳ सखिविदꣳ सत्राजितं धनजितꣳ सुवर्जितम् [८] ॥
ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरम्। बृहद्गायत्रवर्तनि [९] ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसाऽऽददेऽङ्गिरस्व- दभ्रिरसि नारि-(३)-रसि पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदा भर त्रैष्टुभेन त्वा छन्दसा

---

( १।१ ) वा० य० ११,१; मै० २,७,१; काठ० १५,२२। ( १।२ ) वा० य० ११,३; मै० २,७,३; काठ० १५, २५। ( १।३ ) वा० य० ११,२; मै० २,७,२; काठ० १५,२४। ( १।४ ) ऋ० ५,८१,१; वा० य० ५,१४; ११,४; ३७,२; मै० १,२,९१; २,७,४; ४,९,१; काठ० २,५१; १५,२६। ( १।५ ) ऋ० १०,१३,१; वा० य० ११,५; अथर्व० १८,३,३९; मै० २,७,५; काठ० १५,२७। ( १।६ ) ऋ० ५,८१,३; वा० य० ११,६; मै० २,७,६; काठ० १५,२८। ( १।७ ) वा० य० ९,१; ११,७; ३०,१; मै० १,११,१; २,७,७; काठ० १३,४४; १४,२९; १५,२९। ( १।८-९ ) वा० य० ११,८; मै० २,७,८, काठ० १५,४१-४२। ( १।१० ११ ) वा० य० ११,९-१०; अथर्व० १९,५१,२; मै० २,७,९; काठ० १६, १-३।

ऽऽ ददेऽङ्गिरस्वत्[11] — द्वाभ्रिरसि नारिरसि त्वया वयꣳ सधस्थ आऽग्निꣳ शकेम खनितुं पुरीष्यं जागतेन त्वा छन्दसा ऽऽ ददेऽङ्गिरस्वत्[12] —

— द्धस्त आधाय सविता बिभ्रदभ्रिꣳ हिरण्ययीम् ।
तया ज्योतिरजस्रमिदग्निं खात्वी न आ भराऽऽनुष्टुभेन त्वा छन्दसा (४) ऽऽ ददेऽङ्गिरस्वत्[13] ॥
( इत, सुव, नारि,-श्छन्दसा, त्रीणि च ३ ) ॥ १ ॥

मृदाक्रमणम् ॥ त्रिष्टुप्; ३,४,१९ गायत्री; ११-१२,२० अनुष्टुप्; २ उपरिष्टाद्बृहती; १३ पुरस्ताद्बृहती; ५ प्रस्तार-पङ्क्तिः; १,१०,१४-१५,१७-१८,२१ मध्येज्योतिः ।

इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि विदथेषु कव्या ।
तया देवाः सुतमा बभूवुर्ऋतस्य सामन्त्सरमारपन्ती[1] ॥
प्रतूर्तं वाजिन्ना द्रव वरिमाणमनु संवतम् ।
दिवि ते जन्म परममन्तरिक्षे नाभिः पृथिव्यामधि योनिः[2] ॥
युञ्जाथाꣳ रासभं युवमस्मिन् यामे वृषण्वसू । अग्निं भरन्तमस्मयुम्[3] ॥
योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये[4] ॥
प्रतूर्वन्-( १ )-न्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यान्मयोभूरेहि ।
उर्वन्तरिक्षमन्विहि स्वस्तिगव्यूतिरभयानि कृण्वन्[5] ॥

पूष्णा सयुजा सह । पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेह्य[6] — ग्निं पुरीष्यमङ्गिरस्वदच्छेमो[7] ऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामो[8] ऽग्निं पुरीष्यमङ्गिरस्वद्भरामः[9] ॥

अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्यस्य ( २ ) पुरुत्रा च रश्मीननु द्यावापृथिवी आ ततान[10] ॥
आगत्य वाज्यध्वनः सर्वा मृधो वि धूनुते । अग्निꣳ सधस्थे महति चक्षुषा नि चिकीषते[11] ॥
आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वम् ।
भूम्या वृत्वाय नो ब्रूहि यतः खनाम तं वयम्[12] ॥

---

( १।१२-१३ ) वा० य० ११,१०-११; मै० २,७,९-११; ( २।१ ) वा० य० २२,२; मै० ३,१२,१; काठ० [ अश्वमेध: ] १,४ । ( २।२ ) वा० य० ११,१२; मै० २,७,१२; काठ० १६,४; १९,३ । ( २।३ ) ऋ० ८,८५,७; वा० य० ११,१३; मै० २,७,१३; काठ० १६,६ । ( २।४ ) ऋ० १,३०,७; वा० य० ११,१४; अथर्व० २०,२६,१; सा० १६३,७४३; मै० २,७,१४; काठ० १६,७ । ( २।५ ) वा० य० ११,१५; मै० २,७,१५; काठ० १६,८ । ( २।६-९ ) ) वा० य० ११,१५-१६; मै० २,७,१७-१८; काठ० १६,९ । ( २।१० ) वा० य० ११,१७; अथर्व० ७,८२,४; १८,१,२७-२८; मै० १,८,५५; २,७,१९; ३,१,४; काठ० १६,१०; १९,५ । ( २।११ ) वा० य० ११,१८; मै० २,७,२०; काठ० १६,११ । ( २।१२ ) वा० य० ११,१९; मै० २,७,२१; काठ० १६,१२ ।

द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षꣳ समुद्रस्ते योनिः।
विख्याय चक्षुषा त्वमभि तिष्ठ (३) पृतन्यतः[13] ॥
उत्क्राम महते सौभगायास्मादास्थानाद् द्रविणोदा वाजिन्।
वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनिष्यन्त उपस्थे अस्याः[14] ॥
उदक्रमीद् द्रविणोदा वाज्यर्वाऽकः स लोकꣳ सुकृतं पृथिव्याः।
ततः खनेम सुप्रतीकमग्निꣳ सुवो रुहाणा अधि नाक उत्तमे[15] ॥
अपो देवीरुप सृज मधुमतीरयक्ष्माय प्रजाभ्यः।
तासाꣳ स्थानादुज्जिहतामोषधयः सुपिप्पलाः[16] ॥
जिघर्म्य-(४)-ग्निं मनसा घृतेन प्रतिक्ष्यन्तं भुवनानि विश्वा।
पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नꣳ रभसं विदानम्[17] ॥
आ त्वा जिघर्मि वचसा घृतेनारक्षसा मनसा तज्जुषस्व।
मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तनुवा जर्हृषाणः[18] ॥
परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे[19] ॥
परि त्वाऽग्ने पुरं वयं विप्रꣳ सहस्य धीमहि। धृषद्वर्णं दिवेदिवे भेत्तारं (५) भङ्गुरावतः[20] ॥
त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः[21] ॥ (प्रतूर्वं,- न्त्सूर्यस्य, तिष्ठ, जिघर्मि, भेत्तारं, विꣳशतिश्च २०) ॥२॥

मृत्खननम् ॥ २ स्वराडभिसारिणी; ३,१०-११,१३ त्रिष्टुप्; ४-५ अनुष्टुप्; ६ प्रतिष्ठा; ७-९ गायत्री; १२ बृहती।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां
पृथिव्याः सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत् खनामि[1] ॥
ज्योतिष्मन्तं त्वाऽग्ने सुप्रतीकमजस्रेण भानुना दीद्यानम्।
शिवं प्रजाभ्योऽहिꣳसन्तं पृथिव्याः सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत् खनामि[2] ॥

---

(२।१३) वा० य० ११,२०; मै० २,७,२२; काठ० १६,१३। (२।१४) वा० य० ११,२१; मै० २,७,२३; काठ० १६,१४। (२।१५) वा० य० ११,२२; मै० २,७,२४; काठ० १६,१५। (२।१६) वा० य० ११,३८; मै० २,७,४५; काठ० १६,३५; १९,९। (२।१७) ऋ० २,१०,४; वा० य० ११,२३; मै० २,७,२५; काठ० १६,१६। (२।१८) ऋ० २,१०,५; वा० य० ११,२४; मै० २,७,२६; काठ० १६,१७। (२।१९) ऋ० ४,१५,३; वा० य० ११,२५, सा० ३०; मै० १,१,११; २,७,२७; ४,१३,२४; काठ० १६,१८,२४२; ३८,१३९। (२।२०) ऋ० १०,८७,२२; वा० य० ११,२६; अथर्व० ७,७१,१; ८,३,२२; मै० २,७,२८; काठ० १६,१९; ३८,१४०। (२।२१) ऋ० २,१,१; वा० य० ११,२७, मै० २,७,२९; काठ० १६,२०। (३।१-२) वा० य० ११,२८; मै० २,७,३०; काठ० १६,२१-२२।

अपां पृष्ठम॑सि स॒प्रथा॑ उ॒र्व॑ग्निं भ॑रि॒ष्यदप॑रावपिष्ठम् ।
वर्ध॑मानं म॒ह आ च॒ पुष्क॑रं दि॒वो मात्र॑या वरि॒णा प्र॑थस्व[३] ॥
शर्म॑ च स्थो (१) वर्म॑ च स्थो॒ अच्छि॑द्रे बहु॒ले उ॒भे ।
व्यच॑स्वती॒ सं व॑साथां भ॒र्तम॒ग्निं पुरी॒ष्य॑म्[४] ॥
सं व॑साथाꣳ सुव॒र्विदा॑ स॒मीची॒ उर॑सा॒ त्मना॑ । अ॒ग्निम॒न्तर्भ॑रि॒ष्यन्ती॒ ज्योति॑ष्मन्त॒मज॑स्र॒मित्[५] ॥
पुरी॒ष्यो॑ऽसि वि॒श्वभ॑राः । अथ॑र्वा त्वा प्र॒थमो निर॑मन्थदग्ने[६] ॥
त्वाम॑ग्ने॒ पुष्क॑रा॒दध्यथ॑र्वा॒ निर॑मन्थत । मू॒र्ध्नो विश्व॑स्य वा॒घतः॑[७] ॥
तमु॑ त्वा द॒ध्यङ्ङृषिः॑ पु॒त्र ई॑धे॒ (२) अथ॑र्वणः । वृ॒त्र॒हणं॑ पुरन्द॒रम्[८] ॥
तमु॑ त्वा पा॒थ्यो वृषा॒ समी॑धे दस्यु॒हन्त॑मम् । ध॒न॒ञ्ज॒यꣳ रणे॑रणे[९] ॥
सीद॑ होतः॒ स्व उ॑ लो॒के चि॑कि॒त्वान्त्सा॒दया॑ य॒ज्ञꣳ सु॑कृ॒तस्य॒ योनौ॑ ।
दे॒वा॒वीर्दे॒वान् ह॒विषा॑ यजा॒स्यग्ने॑ बृ॒हद्यज॑माने॒ वयो॑ धाः[१०] ॥
नि होता॑ होतृ॒षद॑ने॒ विदा॑नस्त्वे॒षो दी॑दि॒वाꣳ अ॑सदत् सु॒दक्षः॑ ।
अद॑ब्धव्रतप्रमति॒र्वसि॑ष्ठः सहस्रम्भ॒रः शुचि॑जिह्वो अ॒ग्निः[११] ॥
सꣳ सीद॑स्व म॒हाꣳ अ॑सि॒ शोच॑स्व (३) दे॒व॒वीत॑मः ।
वि धू॒मम॑ग्ने अरु॒षं मि॑येध्य सृ॒ज प्र॑शस्त दर्श॒तम्[१२] ॥
जनि॑ष्वा॒ हि जेन्यो॒ अग्रे॒ अह्नाꣳ हि॒तो हि॒तेष्व॑रु॒षो वने॑षु ।
दमे॑दमे स॒प्त रत्ना॒ दधा॑नो॒ऽग्निर्होता॒ नि ष॑सादा॒ यजी॑यान्[१३] ॥ (स्थ॒, ई॒धे॒, शोच॑स्व, स॒प्तवि॑ꣳशतिश्च २७) ॥३॥

सूक्ताहरणम् ॥ १,५,११ त्रिष्टुप्; २,६,८-९,१२ अनुष्टुप्; ३,७ बृहती; ४ उपरिष्टाद्बृहती; १० उष्णिक् ।

सं ते॑ वा॒युर्मा॑त॒रिश्वा॑ दधातूत्ता॒नायै॒ हृद॑यं॒ यद्विलि॑ष्टम् ।
दे॒वानां॒ यश्चर॑ति प्रा॒णथे॑न॒ तस्मै॑ च देवि॒ वष॑डस्तु॒ तुभ्य॑म्[१] ॥
सु॒जा॑तो॒ ज्योति॑षा स॒ह शर्म॒ वरू॑थ॒माऽस॑दः॒ सुवः॑ ।
वासो॑ अग्ने वि॒श्वरू॑प॒ꣳ सं व्य॑यस्व विभावसो[२] ॥

---

(३।३-६) वा० य० ११,२९-३२; मै० २,७,३१-३४; ३,१,७; काठ० १६,२३-२६,१८२। (३।७-९) ऋ० ६,१६,१३-१५; वा० य० ११,३२-३४; सा० ९; मै० २,७,३५-३७; काठ० १६,२८-३०। (३।१०) ऋ० ३,२९,८; वा० य० ११,३५; मै० २,७,३८; २,८,५; काठ० १६,३१। (३।११) ऋ० २,९,१; वा० ११,३६; मै० २,७,३९; काठ० १६,३२। (३।१२) ऋ० १,३६,९; वा० य० ११,३७; ३८,१७; मै० २,७,४०; ४,९,५३; काठ० १६,३३। (३।१३) ऋ० ५,१,५; मै० २,७,४१; काठ० १६,३४। (४।१) वा० य० ११,३९; मै० २,७,४६; ४,१४,२२; काठ० १६,३६। (४।२) वा० य० ११,४०; मै० २,७,४७; काठ० १६,३७।

उदु तिष्ठ स्वध्वरावा नो देव्या कृपा ।
दृशे च भासा बृहता सुशुक्वनिराऽग्ने याहि सुशस्तिभिः[3] (१)॥
ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥
स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु ।
चित्रः शिशुः परि तमाँस्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गाः ॥
स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहनः ॥
शिवो भव (२) प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ।
मा द्यावापृथिवी अभि शूशुचो माऽन्तरिक्षं मा वनस्पतीन् ।
प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा । भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा ॥
रासभो वां कनिक्रदत् सुयुक्तो वृषणा रथे । स वामग्निं पुरीष्यमाशुर्दूतो वहादितः ॥
वृषाऽग्निं वृषणं भरन्नपां गर्भँ समुद्रियम् । अग्न आ याहि (३) वीतय ऋतँ सत्यम् ॥
ओषधयः प्रति गृह्णीताग्निमेतँ शिवमायन्तमभ्यत्र युष्मान् ।
व्यस्यन् विश्वा अमतीररातीर्निषीदन् नो अप दुर्मतिँ हनत् ॥
ओषधयः प्रति मोदध्वमेनं पुष्पावतीः सुपिप्पलाः ।
अयं वो गर्भ ऋत्वियः प्रत्नँ सधस्थमाऽसदत्[12]॥ (सुशस्तिभिः-भव, याहि, षट्त्रिँशच्च २१)॥४॥

उखानिर्माणम्॥ १ त्रिष्टुप्; ५,७-१०,१९ अनुष्टुप्; २-४ गायत्री; ६ महाबृहती ।

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ।
सुशर्मणो बृहतः शर्मणि स्यामग्नेरहँ सुहवस्य प्रणीतौ[1] ॥
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे[2] ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः[3] ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥

(४।३) ऋ० ८,२३,५; वा० य० ११,४१; मै० २,७ ४८; ४,९,१९९; काठ० १६,३८। (४।४) ऋ० १,३६,१३; वा० य० ११,४२; सा० ५७; मै० २,७,४९; ४,१३,५; काठ० १५,५३; १६,३९। (४।५) ऋ० १०,१,२; वा० य० ११,४३; मै० २,७,५०; काठ० १६,४०। (४।६-८) वा० य० ११,४४-४६; मै० २,७,५१—५३; ३,१,८; काठ० १६,४१-४३। (४।१०) वा० य० ११,४६—४७; मै० २,७,५४-५५; काठ० १६,४४-४५; अग्न आ याहि वीतये। ऋ० ६,१६,१०; सा० १,६६०। (४।११) वा० य० ११,४६; मै० २,७,५६; काठ० १६,४६। (४।१२) वा० य० ११,४८; मै० २,७,५७; काठ० १६,४७। (५।१) ऋ० ३,१५,१; वा० य० ११,४९; मै० २,७,५८; काठ० १६,४८। (५।२-४) ऋ० १०,९,१-३; वा० य० ११,५०-५२; ३६,१४-१६; अथर्व० १,५,१-३; सा० १८३७-३९; मै० २,७, ५९-६१; काठ० १६, ४९-५१; ३५,१७-१९।

मित्रः (१) सꣳसृज्यं पृथिवीं भूमिं च ज्योतिषा सह। सुजातं जातवेदसमग्निं वैश्वानरं विभुम्॥
अयक्ष्माय त्वा सꣳ सृजामि प्रजाभ्यः ।
विश्वे त्वा देवा वैश्वानराः सꣳ सृजन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत् ॥
रुद्राः सम्भृत्य पृथिवीं बृहज्ज्योतिः समीधिरे । तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते ॥
सꣳसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम्। हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली करोतु (२) ताम्॥
सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह ओखां दधातु हस्तयोः ॥
उखां करोतु शक्त्या बाहुभ्यामदितिर्धिया । माता पुत्रं यथोपस्थे साऽग्निं बिभर्तु गर्भ आ ॥

मखस्य शिरोऽसि[११] यज्ञस्य पदे स्थः[१२] । वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाऽङ्गिरस्वत् पृथिव्यसि[१३] रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वदन्तरिक्षमसि[१४] (३) आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाऽङ्गिरस्वद् द्यौरसि[१५] विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वद्दिशोऽसि ध्रुवाऽसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानायादित्यै रास्नाऽस्यदितिस्ते बिलं गृह्णातु पाङ्क्तेन छन्दसाऽङ्गिरस्वत् ॥

कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये। तां पुत्रेभ्यः सं प्रा-(४)-यच्छददितिः श्रपयानिति ॥
(मित्रः, करोत्व,-सि, प्र, चत्वारि च ४) ॥५॥

उखासंस्कारः ॥ १४ शङ्कुमत्युष्णिक्; १८ अनुष्टुप्; १५-१७ गायत्री ।

वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाऽङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन छन्दसाऽङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वदिन्द्रस्त्वा धूपयत्वङ्गिरस्वद्विष्णुस्त्वा धूपयत्वङ्गिरस्वद्वरुणस्त्वा धूपयत्वङ्गिरस्वददितिस्त्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थेऽङ्गिरस्वत् खनत्ववट देवानां त्वा पत्नी-(१)-र्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वद् दधतूखे[९] धिषणास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वदभीन्धतामुखे[१०] ग्नास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्रपयन्तूखे[११] वरूत्रयो[१२] जनयस्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वत् पचन्तूखे[१३]।

---

(५।५) वा० य० ११,५३; मै० २,७,६२; काठ० १६,५२; १९,१४। (५।६) वा० य० ११,५३ (च० पा०); ११, ५८,६०,६५; मै० २,७,६२ (च० पा०), ६७,६९,७४; काठ० १६,५२ (च० पा०); ५७, ५९,६४। (५।७) वा० य० ११,५४; मै० २,७,६३; काठ० १६,५३। (५।८) वा० य० ११,५५; मै० २,७,६४; काठ० १६,५४। (५।९) वा० य० ११,५६; मै० २,७,६५; काठ० १६,५५। (५।१०-११) वा० य० ११,५७; मै० २,७,६६-६७; काठ० १६,५५-५७। (५।१३-१९) वा० य० ११,५८-५९; मै० २,७,६७-६८; काठ० १६,५७-५८। (६।१-१३) वा० य० ११,६१; मै० २, ७,६९; काठ० १६,५९-६०।

मित्रैतामुखां पंचैषा मा भेदि । एतां ते परि ददाम्यभित्यै[१४] ॥
अभीमां (२) महिना दिवं मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम्[१५] ॥
मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तमम्[१६] ॥
देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः । सुबाहुरुत शक्त्या[१७] ॥
अपद्यमाना पृथिव्याशा दिश आ पृण । उत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वम्[१८] ॥
वसवस्त्वा ऽऽच्छृन्दन्तु गायत्रेण छन्दसाऽङ्गिरस्वद्[१९] रुद्रास्त्वा ऽऽच्छृन्दन्तु (३) त्रैष्टुभेन छन्दसाऽङ्गिरस्वं[२०]—दादित्यास्त्वा ऽऽच्छृन्दन्तु जागतेन छन्दसाऽङ्गिरस्वद्[२१] विश्वे त्वा देवा वैश्वानरा आ च्छृन्दन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत्[२२] ॥(पत्नीं,-रिमां, रुद्रास्त्वा ऽऽच्छृन्दन्त्वे-कान्नविंशतिश्च १९)॥६॥

अग्निचयनाङ्गपशुसामिधेन्यः ॥ १-५,७-९ त्रिष्टुप् ; ६ विराड्रूपा; १० अनुष्टुप् ।

समास्त्वाऽग्न ऋतवो वर्धयन्तु संवत्सरा ऋषयो यानि सत्या ।
सं दिव्येन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशः पृथिव्याः[१] ॥
सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय ।
मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसः सन्तु माऽन्ये[२] ॥
त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने (१) संवरणे भवा नः ।
सपत्नहा नो अभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन्[३] ॥
इहैवाग्ने अधि धारया रयिं मा त्वा नि क्रन् पूर्वचितो निकारिणः ।
क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः[४] ॥
क्षत्रेणाग्ने स्वायुः सꣳ रभस्व मित्रेणाग्ने मित्रधेये यतस्व ।
सजातानां मध्यमस्था एधि राज्ञामग्ने विहव्यो दीदिहीह[५] ॥
अति (२) निहो अति स्रिधोऽत्यचित्तिमत्यरातिमग्ने ।
विश्वा ह्यग्ने दुरिता सहस्वाथास्मभ्यꣳ सहवीराꣳ रयिं दाः[६] ॥

---

(६।१४) वा० य० ११,६४ (उत्तरार्धः); मै० २,७,७३; काठ० १६,६४ । (६।१५) वा० य० ३८,१७; मै० ४,९,२९ (उत्तरार्धः)-३० । (६।१६) ऋ० ३,५९,६; वा० य० ११,६२; मै० १,५,४०; २,७,७०; ४,९,३१; काठ० १६,६१; २३,४१ । (६।१७) वा० य० ११ ६३ (पूर्वार्धः); मै० २,७,७१; ४,९,३२; काठ० १६,६२ । (६।१८) वा० य० ११,६३ (उत्तरार्धः)-६४ (पूर्वार्धः); मै०२,७,७२; काठ० १६,६३। (६।१९-२२) वा०य० ११,६५; मै० २,७,७४; काठ०१६,६४ (७।१) वा० य० २७,१; अथर्व० २,६,१; मै० २,१२,२५; काठ० १८,८१ । (७।२) वा० य० २७,२; अथर्व० २,६,२; मै० २,१२,२६; काठ० १८,८२ । (७।३) वा० य० २७,३; अथर्व० २,६,३; मै० २,१२,२७; काठ० १८ ८३ । (७।४) वा० य० २७,४; अथर्व० ७,८२,३; मै० २,१२,२८; काठ० १८,८४ । (७।५) वा० य० २७,५; अथर्व. २,६,४; मै, २,१२,२९; काठ. १८,८५ । (७।६) वा० य० २७,६; अथर्व० २,६,५; मै० २,१२,३०; काठ० १८,८६ ।

अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह ।
विश्वा आशाः प्रमुञ्चन् मानुषीर्भियः शिवाभिरद्य परि पाहि नो वृधे[७] ॥
बृहस्पते सवितर्बोधयैनꣳ सꣳशितं चित्सन्तराꣳ सꣳ शिशाधि ।
वर्धयैनं महते सौभगाय (३) विश्व एनमनु मदन्तु देवाः ॥
अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः ।
प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः[९] ॥
उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ (अग्ने,ऽसि, सौभगाय, चतुस्त्रिꣳशच्च ३४) ॥७॥

आप्रियो याज्यापुरोऽनुवाक्याः॥ १-६ पिपीलिकमध्यानुष्टुप्; ७,१०-१२ पिपीलिकमध्योष्णिक्; ८ पुरउष्णिक्; ९ शङ्कुमती गायत्री; १३-२० त्रिष्टुप्।

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीꣳष्यग्नेः ।
द्युमत्तमा सुप्रतीकस्य सूनोः[१] ॥
तनूनपादसुरो विश्ववेदा देवो देवेषु देवः । पथ आऽनक्ति मध्वा घृतेन[२] ॥
मध्वा यज्ञं नक्षसे प्रीणानो नराशꣳसो अग्ने । सुकृद्देवः सविता विश्ववारः[३] ॥
अच्छायमेति शवसा घृतेनेडानो वह्निर्नमसा । अग्निꣳ स्रुचो अध्वरेषु प्रयत्सु[४] ॥
स यक्षदस्य महिमानमग्नेः स (१) ई मन्द्रासु प्रयसः । वसुश्चेतिष्ठो वसुधातमश्च[५] ॥
द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः । उरुव्यचसो धाम्ना पत्यमानाः[६] ॥
ते अस्य योषणे दिव्ये न योनावुषासानक्ता । इमं यज्ञमवतामध्वरं नः[७] ॥
दैव्या होतारावूर्ध्वमध्वरं नोऽग्नेर्जिह्वामभि गृणीतम् । कृणुतं नः स्विष्टिम्[८] ॥

---

(७।७) वा० य० २७,७; अथर्व० ७,८४,१; मै० २,१२,३१; काठ० १८,८७; शिवेभिरद्य परि पाहि नो वृधे । ऋ० ६,७१,३ । (७।८) वा० य० २७,८; अथर्व० ७, १६,१; मै० २,१२,३२; काठ० १८,९० । (७।९) वा० य० २७,९; अथर्व० ७,५३,१; मै० २,१२,३३; काठ० १८,८८ । (७।१०) ऋ० १,५०,१०; वा० य० २०,२१; २७,१०; ३५,१४; ३८,२४; अथर्व० ७,५३,७; मै० २,१२,३४; काठ० १८,८९ । (८।१) वा० य० २७,११; अथर्व० ५,२७,१; मै० २,१२, ३५; काठ० १८,९२ । (८।२) वा० य० २७,१२; अथर्व० ५,२७,१-२; मै० २,१२,३६ (पूर्वार्धः); काठ० १८,९३ । (८।३) वा० य० २७,१३; अथर्व० ५,२७,३; मै० २,१२,३६ (उत्तरार्धः); ३७ (पूर्वार्धः); काठ० १८,९३ (तृ०पा०), ९४(पूर्वार्धः)। (८।४) वा० य० २७,१४; अथर्व० ५,२७,४-५; मै० २,१२,३७ (उत्तरार्धः); ३८ (पूर्वार्धः); काठ० १८,९४ (उत्तरार्धः)-९५ (पूर्वार्धः) । (८।५) वा० य० २७,१५; अथर्व० ५,२७,५-६; मै० २,१२,३८ (उत्तरार्धः), ३९; काठ० १८,९५ (उत्तरार्धः), ९६ । (८।६) वा० य० २७,१६; अथर्व० ५,२७,७-८; मै० २,१२,४०; काठ० १८,९७। (८।७) वा०य० २७,१७, अथर्व० ५,२७,८; मै० २,१२,४१; काठ० १८,९८ । (८।८) वा० य० २७,१८; अथर्व० ५,२७,९ (पूर्वार्धः); मै० २,१२,४२; काठ० १८,९९ ।

तिस्रो देवीर्बर्हिरेदꣳ सदन्त्विडा सरस्वती (२) भारती। मही गृणाना ॥
तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टा सुवीरम्। रायस्पोषं वि ष्यतु नाभिमस्मे[१०] ॥
वनस्पतेऽव सृजा रराणस्त्मना देवेषु। अग्निर्हव्यꣳ शमिता सूदयाति[११] ॥
अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यम्। विश्वे देवा हविरिदं जुषन्ताम्[१२] ॥
हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्या-(३)-मुतेमां कस्मै देवाय हविषा विधेम[१३] ॥
यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम[१४] ॥
य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः।
यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम[१५] ॥
यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहा-(४)-ऽऽहुः।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम[१६] ॥
यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने।
यत्राधि सूर उदितौ व्येति कस्मै देवाय हविषा विधेम[१७] ॥
येन द्यौरुग्रा पृथिवी च दृढे येन सुवः स्तभितं येन नाकः।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम[१८] ॥
आपो ह यन्महतीर्विश्व-(५)-मायन् दक्षं दधाना जनयन्तीरग्निम्।
ततो देवानां निरवर्ततासुरेकः कस्मै देवाय हविषा विधेम[१९] ॥
यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीरग्निम्।
यो देवेष्वधि देव एक आसीत् कस्मै देवाय हविषा विधेम[२०] ॥ (स, सरस्वती, द्या॰, सह, विश्वं, चतुस्त्रिꣳशच्च ३४) ॥८॥

---

(८।९) वा० य० २७,१९; अथर्व० ५,२७,९; (उत्तरार्धः); मै० २,१२,४३; काठ० १८,१०० । (८।१०–१२) वा० य० २७,२०-२२; अथर्व० ५,२७,१०-१२, मै० २,१२,४४-४६, काठ० १८,१०१-१०३ । (८।१३) ऋ० १०,१२१,१, वा० य० १३,४; अथर्व० ४,२,७, मै० २,७,१९८; काठ० १६,१८४; ४०,१ । (८।१४) ऋ० १०,१२१,३, वा० य० २३,३; २५,११; अथर्व० ४,२,२; मै० २,१३,१११; काठ० ४,१२९, ४०,२ । (८।१५) ऋ० १०,१२१,२; वा० य० २५,१३; अथर्व० ४,२,१, १३,३,२४; मै० २,१३,११२; काठ० ४०,३ । (८।१६) ऋ० १०,१२१,४; वा० य० २५,१२; अथर्व० ४,२,५, मै० २,१३,११३; काठ० ४०,६ । (८।१७) ऋ० १०,१२१,६; वा० य० ३२,७, अथर्व० ४,२,३, मै० २,१३,११५; काठ० ४०,५ । (८।१८) ऋ० १०,१२१,५; वा० य० ३२,६; अथर्व० ४,२,४, मै० २,१३,११४, काठ० ४०,४ । (८।१९) ऋ० १०,१२१,७; वा० य० २७,२५, ३२,७; अथर्व० ४,२,६; मै० २,१३,११६; काठ० ४०,७ । (८।२०) ऋ० १०,१२१,८, वा० य० २७,२६, ३२,७ ।

अग्न्युत्पादनम् ॥ ७-८,१५-१६ अनुष्टुप्; ११-१३ गायत्री; ९,१४ त्रिष्टुप्; १० पिपीलिकमध्योष्णिक् ।

आकूतिमग्निं प्रयुजꣳ स्वाहा[1] मनो मेधामग्निं प्रयुजꣳ स्वाहा[2] चित्तं विज्ञातमग्निं प्रयुजꣳ स्वाहा[3] वाचो विधृतिमग्निं प्रयुजꣳ स्वाहा[4] प्रजापतये मनवे स्वाहा[5] ऽग्नये वैश्वानराय स्वाहा[6]

विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा[7] ॥

मा सु भित्था मा सु रिषो दृꣳहस्व वीडयस्व सु।अम्ब धृष्णु वीरयस्व (१) अग्निश्चेदं करिष्यथः॥

दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृताऽसि ।

जुष्टं देवानामिदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन्[8] ॥

मित्रैतामुखां तपैषा मा भेदि । एतां ते परि ददाम्यभित्त्यै[9] ॥

द्रवन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः[10] ॥

परस्या अधि संवतोऽवराꣳ अभ्या (२) तर । यत्राहमस्मि ताꣳ अव[11] ॥

परमस्याः परावतो रोहिदश्व इहाऽऽगहि । पुरीष्यः पुरुप्रियोऽग्ने त्वं तरा मृधः[12] ॥

सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।

मैनामर्चिषा मा तपसाऽभि शूशुचोऽन्तरस्याꣳ शुक्रज्योतिर्वि भाहि[13] ॥

अन्तरग्ने रुचा त्वमुखायै सदने स्वे । तस्यास्त्वꣳ हरसा तपन् (३) जातवेदः शिवो भव[14] ॥

शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वम् । शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहाऽसदः[15]॥

(वीरयस्वा,-ऽऽ,तपन्, विꣳशतिश्च २०) ॥९॥

अग्निधारणम् ॥ १-३,५-१० अनुष्टुप्; ३-४,११,१३ त्रिष्टुप्; १२ जगती ।

यदग्ने यानि कानि चाऽऽते दारूणि दध्मसि । तदस्तु तुभ्यमिद्घृतं तज्जुषस्व यविष्ठ्य[1] ॥

यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य[2] ॥

रात्रिꣳरात्रिमप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै ।

रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम[3] ॥

---

(९।१-६) वा० य० ११,६६; मै० २,७,७५; काठ० १६,६५। (९।७) ऋ० ५,५०,१; वा० य० ४,८; ११,६७; २२,२१; मै० २,७,७६; काठ० १६,६६ । (९।८-९) वा० य० ११,६८-६९; मै० २,७,७७-८; काठ० १६,६७-६८। (९।१०) वा० य० ११,६४ (उत्तरार्धः); मै० २,७,७३; काठ० १६,६४। (९।११) ऋ० २,७,६; वा० य० ११,७०; मै० २,७,७९; काठ० १६,६९। (९।१२) ऋ० ८,७५,१५; वा० य० ११,७१; मै० २,७,८०; काठ० १६,७०। (९।१३) वा० य० ११,७२; मै० २,७,८१; काठ० १६,७१। (९।१४) वा० य० १२,१५; मै० २,७,१०५; काठ० १६,९६। (९।१५) वा० य० १२,१६; मै० २,७,१०६; काठ० १६,९७। (९।१६) वा० य० १२,१७; मै० २,७,१०७, काठ० १६,९८। (१०।१) ऋ० ८,१०२, २०; वा० य० ११,७३; अथर्व० १९,६४,२; मै० २,७,८२; काठ० १६,७२। (१०।२) ऋ० ८,१०२,२१; वा० य० ११, ७४; मै० २,७,८३; काठ० १६,७३। (१०।३) वा० य० ११,७५; मै० २,७,८४; काठ० १६,७४।

नाभा (१) पृथिव्याः समिधानमग्निꣳ रायस्पोषाय बृहते हवामहे ।
इरंमदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिम् ॥
याः सेना अभीत्वरीराव्याधिनीरुगणा उत ।
ये स्तेना ये च तस्करास्ताꣳस्ते अग्नेऽपि दधाम्यास्ये ॥
दꣳष्ट्राभ्यां मलिम्लूञ्जम्भ्यैस्तस्कराꣳ उत ।
हनूभ्याꣳ स्तेनान् भगवस्ताꣳस्त्वं खाद सुखादितान् ॥
ये जनेषु मलिम्लवः स्तेनासस्तस्करा वने । ये (२) कक्षेष्वघायवस्ताꣳस्ते दधामि जम्भयोः[७] ॥
यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्यो अस्मान् दिप्साच्च सर्वं तं मस्मसा कुरु ॥
सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलम् । सꣳशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः ॥
उदेषां बाहू अतिरमुद्वर्च उदू बलम् । क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि (३) स्वाꣳ अहम् ॥
दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत् सुरेताः[११] ॥
विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे ।
वि नाकमख्यत् सविता वरेण्योऽनु प्रयाणमुषसो वि राजति[१२] ॥
नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची ।
द्यावा क्षामा रुक्मो (४) अन्तर्वि भाति देवा अग्निं धारयन् द्रविणोदाः[१३] ॥
सुपर्णोऽसि गरुत्मान् त्रिवृत् ते शिरो गायत्रं चक्षुः स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं छन्दाꣳस्यङ्गानि धिष्णियाः शफा यजूꣳषि नाम[१४] ॥
सुपर्णोऽसि गरुत्मान् दिवं गच्छ सुवः पत[१५]॥ (नाभा, ये, नयामि, रुक्मो, ऽष्टात्रिꣳशच्च ३८) ॥१०॥

चातुर्मास्यगतवैश्वदेवपर्वणि विहित याज्यापुरोऽनुवाक्याः ॥ १-७,९,११,१७,१९-२० गायत्री; १०,१२,१४,१८ त्रिष्टुप्, ८,१३ जगती ।

अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद्देवेषु गच्छति[१] ॥

(१०।४) वा० य० ११,७६; मै० २,७,८५; काठ० १६,७५। (१०।५) वा० य० ११,७७; मै० २,७,८६; काठ० १६,७६। (१०।६) वा० य० ११,७८; मै० २,७,८८; काठ० १६,७७। (१०।७) वा० य० ११,७९; मै० २,७,८७; काठ० १६,७८। (१०।८) वा० य० ११,८०; मै० २,७,८९; काठ० १६,७२। (१०।९) वा० य० ११,८१; अथर्व० ३,१९,१; मै० २,७,९१, काठ० १६,८०। (१०।१०) वा० य० ११,८२, मै० २,७,९०; काठ० १६,८१। (१०।११) ऋ० १०,४५,८; वा० य० १२,१,२५; मै० २,७,९३; काठ० १६,८२। (१०।१२) ऋ० ५,८१,२; वा० य० १२,३; अथर्व० ७,७३,६, मै० २,७,९५; काठ० १६,८४। (१०।१३) ऋ० १,९६,५, वा० य० १२,२, १७,७०; मै० २,७,९४; काठ० १६,८३। (१०।१४-१५) वा० य० १२,४; मै० २,७,९६-९७; काठ० १६,८५। (११।१) ऋ० १,१,४, मै० ४,१०,७३; काठ० २,६८।

सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे । ताभिर्नोऽविता भव[२] ॥
अग्निर्मूर्धा[३] भुवः[४] ॥
त्वं नः सोम[५] या ते धामानि[६] ॥
तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्[७] ॥
अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता (१) ।
देवेषु च सवितर्मानुषेषु च त्वं नो अत्र सुवतादनागसः ॥
चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती[९] ॥
पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।
ग्नाभिरच्छिद्रꣳ शरणꣳ सजोषा दुराधर्षं गृणते शर्म यꣳसत्[१०] ॥
पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजꣳ सनोतु नः[११] ॥
शुक्रं ते अन्यद्यजतं ते अन्य-(२)-द्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु[१२] ॥
तेऽवर्धन्त स्वतवसो महित्वना ऽऽ नाकं तस्थुरुरु चक्रिरे सदः ।
विष्णुर्यद्धाऽऽवद्वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये[१३] ॥
प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।
ये सहाꣳसि सहसा सहन्ते (३) रेजते अग्ने पृथिवी मखेभ्यः[१४] ॥
विश्वे देवा[१५] विश्वे देवाः[१६] ॥
द्यावा नः पृथिवी इमꣳ सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम्[१७] ॥
प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वꣳ सदने ऋतस्य ।
आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथम्[१८] ॥

---

(११।२) ऋ०१,९१,९; मै० ४,१०,७५; काठ० २,८० । (११।३) ऋ० ८,४४,१६; वा० य०३,१२; १३,१४; १५,२०; सा० २७,१५३२; मै० ४,१०,७४: काठ० ६,२० । (११।४) ऋ० १०,८,६; वा०य०१३,१५; १५,२३; मै० २,७,२११; काठ० १६,१९६ । (११।५) ऋ० १,९१,८; मै० ४,१०,९,७४; ११,१२६; काठ० २,६९ । (११।६) ऋ० १,९१,४; १०,८१,५, वा० य० १७,२१; मै० ४,१०,७६; १४,४; काठ० १३,५७; १८,१४ । (११।७) ऋ० ३,६२,१०; वा० य० ३,३५; सा० १४६२; मै० ४,१०,७७ । (११।८) ऋ० ४,५४,३; मै० ४,१०,७८ । (११।९) ऋ० १,३,११; वा० य० २०,८५ । (११।१०) ऋ० ६,४९,७; मै० ४,१४,४२; काठ० १७,९६ । (११।११) ऋ० ६,५४,५; मै० ४,१०,८०; ११,१०; काठ० ४,१०८ । (११।१२) ऋ०६,५८,१; सा० ७५; मै० ४,१०,८१; १४,२३६; काठ० ४,१०९ । (११।१३) ऋ० १,८५ ७ । (११।१४) ऋ० ६,६६,९; मै० ४,१०,८३; १४,१५३; काठ० १०,४८ । (११।१५-१६) ऋ० ६,५२,१०; १३; मै० ४,१०,८४-८५; काठ० १३,६४ । (११।१७) ऋ० २,४१,२०; मै० ४,१०,८६ । (११।१८) ऋ० ७,५३,१; मै० ४,१०,८७ ।

अग्निꣳ स्तोमेन बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत् [१९] ॥
स हव्यवाडमर्त्य उशिग्दूतश्चनोहितः (४) । अग्निर्धिया समृण्वति [२०] ॥
शं नो भवन्तु [२१] वाजेवाजे [२२] ॥ (पूरुष्वत्ताऽन्यत्,सहन्ते,चनोहितोऽष्टौ च ८) ॥११॥

[युञ्जान २०३। इमां २७०। देवस्य १७७। सं १८६। वि २०४। वसवः १६९। समां १८४। ऊर्ध्वा २८४। आकूतिं १७८। प-२३८।-दृग्न २०८। (एकादश ॥११॥ २२९३)]

[ ॥ इति चतुर्थकाण्डे प्रथमः प्रपाठकः ॥१॥ ]

## देवयजनग्रहाभिधानम् ।

[ अथ द्वितीयः प्रपाठकः ॥२॥ ] अग्निर्ऋषिः ।

आसन्द्यामुखाग्निस्थापनम् ॥ ८-९ गायत्री: ११,१४-१५ अनुष्टुप्; ५,१०,१२-१३ त्रिष्टुप्, ६ तनुशिरा ७ महाबृहती; १६ जगती ।

विष्णोः क्रमोऽस्यभिमातिहा गायत्रं छन्द आ रोह पृथिवीमनु वि क्रमस्व निर्भक्तः स यं द्विष्मो [१] विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभं छन्द आ रोहान्तरिक्षमनु वि क्रमस्व निर्भक्तः स यं द्विष्मो [२] विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आ रोह दिवमनु वि क्रमस्व निर्भक्तः स यं द्विष्मो [३] विष्णोः (१) क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभं छन्द आ रोह दिशोऽनु वि क्रमस्व निर्भक्तः स यं द्विष्मः [४] ॥

अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः [५] ॥
अग्नेऽभ्यावर्तिन्नभि न आ वर्तस्वाऽऽयुषा वर्चसा सन्या मेधया प्रजया धनेन [६] ॥
अग्ने (२) अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः ।
तासां पोषस्य पोषेण पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि [७] ॥
पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा । पुनर्नः पाहि विश्वतः [८] ॥
सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परि [९] ॥
उदुत्तमं वरुण पाशमस्मदवाधमं (३) वि मध्यमꣳ श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम [१०] ॥

---

(११।१९-२०) ऋ० ५,१४,१; ३,११,२; वा० य० २२,१५-१६; मै० ४,१०,१९-३०; काठ० १९,३६-३७। (१।११-२२) ऋ० ७,३८,७-८; वा० य० ९,१६,१८; २१,१०-११; मै० १,११,१०-११; काठ० १३,५१-५३। (२।१-४) वा० य० १२,५; विष्णोः क्रमोऽसि सपत्नहा। अथर्व० १०,५,२५-३५; मै० २,७,९८; काठ० १६,८६। (२।५) ऋ० १०,४५,४; वा० य० १२,६ ११,३३; मै० २,७,९९; काठ० १६,८७। (२।६-९) वा० य० १२,७-१०; सा० १८३२-३३; मै० २,७,१००; काठ० १६,८८-९१। (२।१०) ऋ० १,२४,१५, वा० य० १२,१२; अथर्व० ७,८३,३; १८,४,६९; सा० ५८९; मै० २,७,१०१; काठ० १६,९२।

*

आ त्वाऽहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्त्वस्मिन् राष्ट्रमधि श्रय [११] ॥
अग्ने बृहन्नुषसामूर्ध्वो अस्थान्निर्जग्मिवान् तमसो ज्योतिषाऽऽगात् ।
अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः [१२] ॥
सीद त्वं मातुरस्या (४) उपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।
मैनामर्चिषा मा तपसाऽभि शूशुचोऽन्तरस्याᳫं शुक्रज्योतिर्वि भाहि [१३] ॥
अन्तरग्ने रुचा त्वमुखायै सदने स्वे । तस्यास्त्वᳫं हरसा तपञ्जातवेदः शिवो भव [१४] ॥
शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वम् ।
शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहाऽऽसदः [१५] ॥
हᳫंसः शुचिष-(५)-द्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् [१६] ॥
(विष्णो,-रग्ने,ऽधम,-मस्याः, शुचिषत्, षोडश च १६)॥१॥

आसन्द्यां स्थापितस्याग्नेरुपस्थानम् ॥ त्रिष्टुप् ।

दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः [१] ॥
विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ [२] ॥
समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् ।
तृतीये त्वा (१) रजसि तस्थिवाᳫंसमृतस्य योनौ महिषा अहिन्वन् [३] ॥
अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥
उशिक् पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि ।
इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षत् [५] ॥

---

(१।११) ऋ० १०,१७३,१; वा० य० १२,११; अथर्व० ६,८७,१; मै० २,७,१०१; काठ० १६,९१। (१।१२) ऋ० १०,१,१; वा० य० १२,१३; मै० २,७,१०३; काठ० १६,९४। (१।१३-१५) वा० य० १२,१५-५७; मै० २,७,१०५-७; काठ० १६,९६-९८। (१।१६) ऋ० ४,४०,५; वा० य० १२,१४; मै० २,७,१०४; काठ० १६,९५। (२।१-११) ऋ० १०,४५,१--११; वा० य० १२,१८--२८; मै० २,७,९३,१०८--१६; काठ० १६,९९—१०९। (२।२) विद्मा ते अग्ने त्रेधा। अथर्व० १३,३,२१; विद्म ते धाम परमं गुहा। अथर्व० १,१३,३। (२।३) ०मपामुपस्थे ...।... अवर्धन्। वा० य० १२,२०; ...अगृभ्णन्। मै० २,७,११०। (२।५)...मर्त्येष्व...।...द्यामिनक्षन्। वा० य० १२,२४; मै० २,७,११२; काठ० १६,१०३।

विश्वस्य केतुर्भुवनस्य गर्भ आ (२) रोदसी अपृणाज्जायमानः।
वीडुं चिदद्रिमभिनत् परायन् जना यदग्निमयजन्त पञ्च[६] ॥
श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः।
वसोः सूनुः सहसो अप्सु राजा वि भात्यग्र उषसामिधानः ॥
यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने।
प्र तं नय प्रतरां वस्यो अच्छाभि द्युम्नं देवभक्तं यविष्ठ ॥
आ (३) तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने।
प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः[९] ॥
त्वामग्ने यजमाना अनु द्यून् विश्वा वसूनि दधिरे वार्याणि।
त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो वि वव्रुः[१०] ॥
दृशानो रुक्म उर्व्या व्यद्यौद् दुर्मर्षमायुः श्रिये रुचानः।
अग्निरमृतो अभवद्वयोभिर्यदे-(४)-नं द्यौरजनयत् सुरेताः[११] ॥
(त्वा, गर्भ आ, यविष्ठ आ, यत, चत्वारि च ४)॥२॥

चयनार्थस्य देवयजनस्य परिग्रहः ॥ त्रिष्टुप्, १ उपरिष्टाद्बृहती; २-३,८-१० अनुष्टुप्; ४,७,११-१२,१५ गायत्री।

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः।
प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे[१] ॥
उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः।
स नो भव शिवतमः सुप्रतीको विभावसुः[२] ॥
प्रेदग्ने ज्योतिष्मान् याहि शिवेभिरर्चिभिस्त्वम्।
बृहद्भिर्भानुभिर्भासन् मा हिंसीस्तनुवा प्रजाः[३] ॥
समिधाऽग्निं दुवस्यत घृतैर्बोधयतातिथिम्। आ (१) ऽस्मिन् हव्या जुहोतन[४] ॥
प्रप्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद्भाः।
अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः[५] ॥
आपो देवीः प्रति गृह्णीत भस्मैतत् स्योने कृणुध्वꣳ सुरभावु लोके।
तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृता स्वेनम्[६] ॥

---

(२।६) आ रोदसी०...। ऋ० ७,१३,२। (३।१) वा० य० ११,८३; मै० २,१०,१०; काठ० १६,११३। (३।२-३) वा० य० १२,३१-३२; मै० २,७,११८-१९; काठ० १६,११०—११। (३।४) ऋ० ८,४४,१; वा० य० ३,१; १२,३०; मै० २,७,१२१; काठ० १६,११४। (३।५) ऋ० ७,८,४; वा० य० १२,३४; मै० २,७,१२२; काठ० १६,११५। (३।६) वा० य० १२,३५; मै० २,७,१२३; काठ० १६,११६।

अप्स्वग्ने सधिष्टव (२) सौषधीरनु रुध्यसे । गर्भे सञ्जायसे पुनः [7] ॥
गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि [8] ॥
प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने । सꣳसृज्य मातृभिस्त्वं ज्योतिष्मान् पुनराऽसदः [9] ॥
पुनरासद्य सदनमपश्च पृथिवीमग्ने । शेषे मातुर्यथोपस्थेऽन्तरस्याꣳ शिवतमः [10] ॥
पुनरूर्जा (३) नि वर्तस्व पुनरग्न इषा ऽऽयुषा । पुनर्नः पाहि विश्वतः [11] ॥
सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परि [12] ॥
पुनस्त्वा ऽऽदित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ।
घृतेन त्वं तनुवो वर्धयस्व सत्याः सन्तु यजमानस्य कामाः [13] ॥
बोधा नो अस्य वचसो यविष्ठ मꣳहिष्ठस्य प्रभृतस्य स्वधावः ।
पीयति त्वो अनु (४) त्वो गृणाति वन्दारुस्ते तनुवं वन्दे अग्ने [14] ॥
स बोधि सूरिर्मघवा वसुदावा वसुपतिः । युयोध्यस्मद् द्वेषाꣳसि [15] ॥
(आ, तवो,- र्जाऽनु, षोडश च १६) ॥३॥

गार्हपत्यचयनम् ॥ १,५-७,९ त्रिष्टुप्; ४,८,१०,१३-१४ अनुष्टुप् ।

अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः ।
अदादिदं यमो ऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै [1] ॥
अग्नेर्भस्मास्यग्नेः पुरीषमसि [2] संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात् [3] ॥
सं या वः प्रियास्तनुवः सं प्रिया हृदयानि वः ।
आत्मा वो अस्तु (१) संप्रियः संप्रियास्तनुवो मम [4] ॥
अयꣳ सो अग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः ।
सहस्रियं वाजमत्यं न सप्तिꣳ ससवान्त्सन्त्स्तूयसे जातवेदः [5] ॥
अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाꣳ ऊचिषे धिष्णिया ये ।
याः परस्ताद्रोचने सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः [6] ॥

---

(३।७) ऋ० ८,४३,९; वा० य० १२,३६; मै० २,७,१२४; काठ० १६,११७ । (३।८) वा० य० १२,३७; अथर्व० ५,२५,७; मै० २,७,१२५; काठ० १६,११८ । (३।९-१०) वा० य० १२,३८-३९; मै० २,७,१२६-२७; काठ० १६, ११९-२० । (३।११-१२) तै० सं० ४,२,१,८-९ । (३।१३) ऋ० १०,११६,८ (च० पा०); वा० य० १२,४४; अथर्व० १२,२,६ (पूर्वार्धः); मै० १,७,४; काठ० ८,२९; ३८,१३६ । (३।१४-१५) ऋ० १,१४७,२; २,६,४; वा०य० ११,४२-४३; मै० २,७,१२९-३०; काठ० १६,१२२-२३ । (४।१-३) ऋ० १०,१४,९; वा०य० १२,४५-४६; अथर्व० १८,१,५५; मै० २,७,१३१-३२; काठ० १६,१२४-२५ । (४।४) काठ० ७,४७ । (४।५-६) ऋ० ३,२२,१,३; वा० य० १२,४७,४९; मै० २,७,१३३-३४; काठ०१६,१२६-२७ ।

अग्ने यत् ते दिवि वर्चः पृथिव्यां यदोषधीष्व् (२)- प्सु वा यजत्र ।
येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः [९] ॥
पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः । जुषन्ताꣳ हव्यमाहुतमनमीवा इषो महीः [१०] ॥
इडामग्ने पुरुदꣳसꣳ सनिं गोः शश्वत्तमꣳ हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाऽग्ने सा ते सुमतिर्भूत्वस्मे [११] ॥
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जान-(३)-न्नग्न आ रोहाथा नो वर्धया रयिम् ॥
चिदसि तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद [१२] परिचिदसि तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद ॥
लोकं पृण छिद्रं पृणाथो सीद शिवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योनावसीषदन् [१३] ॥
ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः । जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः [१४] ॥

(अस्त्वो,-षधीषु, जान,- न्नष्टाचत्वारिꣳशच्च ४८)॥४॥

आहवनीयचयनार्थं भुवःकर्षणम् ॥ त्रिष्टुप्; १ महाबृहती; २ द्विपदा त्रिष्टुप्; ३,६,१९ अनुष्टुप्; ४,१० पंक्तिः; ९ महासतोबृहती; १३ बृहती; १४-१५ गायत्री ।

समितꣳ सं कल्पेथाꣳ संप्रियौ रोचिष्णू सुमनस्यमानौ ।
इषमूर्जमभि संवसानौ सं वां मनाꣳसि सं व्रता समु चित्तान्याऽकरम् ॥
अग्ने पुरीष्याधिपा भवा त्वं नः । इषमूर्जं यजमानाय धेहि [२] ॥
पुरीष्यस्त्वमग्ने रयिमान् पुष्टिमाꣳ असि । शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहाऽसदः [३] ॥
भवतं नः समनसौ समोकसा-(१)-वरेपसौ ।
मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः [४] ॥
मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा ।
तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा वि मुञ्चतु ॥
यदस्य पारे रजसः शुक्रं ज्योतिरजायत । तं नः पर्षदति द्विषोऽग्ने वैश्वानर स्वाहा [६] ॥
नमः सु ते निर्ऋते विश्वरूपे (२) ऽयस्मयं वि चृता बन्धमेतम् ।
यमेन त्वं यम्या संविदानोत्तमं नाकमधि रोहयेमम् ॥

---

(४।७-९) ऋ० ३,२२,२,४-५; वा० य० १२,४८,५०-५१; सा० ७६; मै० २,७,१३५-३७; काठ० १६,१२८-३०। (४।१०) ऋ० ३,२९,१०; वा० य० १२,५२; अथर्व० ३,२०,१; मै० २,७,१३८; काठ० १६,१३१। (४।११-१२) वा० य० १२,५३; मै० २,७,१३९; काठ० १६,१३१। (४।१३) वा० य० १२,५४; मै० २,८,१; काठ० १६,१२७। (४।१४) ऋ० ८,६९,३; वा० य० १२,५५; १५,६०; सा० १००६ (पूर्वार्धः); मै० २,८,२; काठ० १६,१२८। (५।१-५) वा० य० १२,५७-६१; अथर्व० ६,९४,१ (पूर्वार्धः); मै० २,७,१४०-४४; काठ० १६,१३३-३७। (५।६) मै० २७,१४९; काठ० १६,१३८; स नः पर्षदति द्विषः। ऋ० परि० २६,७,१९; ३५,१। (५।७) वा० य० १२,६३; अथर्व० ६,६३,२ (पूर्वार्धः)- ३(उत्तरार्धः); ८४,३ (पूर्वार्धः) - ४ (उत्तरार्धः); मै० २,७,१४६; काठ० १६,१४१।

यत् ते देवी निर्ऋतिराबबन्ध दाम ग्रीवास्वविचर्त्यम् ।
इदं ते तद्वि ष्याम्यायुषो न मध्यादथा जीवः पितुमद्धि प्रमुक्तः ॥
यस्यास्ते अस्याः क्रूर आसञ्जुहोम्येषां बन्धानामवसर्जनाय ।
भूमिरिति त्वा जना विदुर्निर्ऋति-(३)-रिति त्वाऽहं परि वेद विश्वतः[९] ॥
असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्यान्वेषि ।
अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥
देवीमहं निर्ऋतिं वन्दमानः पितेव पुत्रं दसये वचोभिः ।
विश्वस्य या जायमानस्य वेद शिरःशिरः प्रति सूरी वि चष्टे[११] ॥
निवेशनः सङ्गमनो वसूनां विश्वा रूपाऽभि चष्टे (४) शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम्[१२] ॥
सं वरत्रा दधातन निराहावान् कृणोतन ।
सिञ्चामहा अवटमुद्रिणं वयं विश्वाऽहाऽदस्तमक्षितम्[१३] ॥
निष्कृताहावमवटꣳ सुवरत्रꣳ सुषेचनम् । उद्रिणꣳ सिञ्चे अक्षितम्[१४] ॥
सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् । धीरा देवेषु सुम्नया[१५] ॥
युनक्त सीरा वि युगा तनोत कृते योनौ वपतेह (५) बीजम् ।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत् सृण्या पक्वमा ऽयत्[१६] ॥
लाङ्गलं पवीरवꣳ सुशेवꣳ सुमतित्सरु ।
उदित् कृषति गामविं प्रफर्व्यं च पीवरीम् । प्रस्थावद्रथवाहनम्[१७] ॥
शुनं नः फाला वि तुदन्तु भूमिꣳ शुनं कीनाशा अभि यन्तु वाहान् ।
शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम्[१८] ॥
कामं कामदुघे धुक्ष्व मित्राय (६) वरुणाय च ।
इन्द्रायाग्नये पूष्ण ओषधीभ्यः प्रजाभ्यः[१९] ॥

---

(५।८) वा० य० १२,६५; अथर्व० ६, ६३,१; मै० २,७,१४८; काठ० १६,१४२ । (५।९) वा० य० १२,६४; अथर्व० ६,८४,१; मै० २,२,१; ७,१४७; काठ० १६,१४० । (५।१०) वा० य० १२,६२; मै० २,७,१४५; काठ० १६,१३९ । (५।११) काठ० ३८,१४९ । (५।१२) ऋ० १०,१३९,३; वा० य० १२,६६; अथर्व० १०,८,४२; मै० २,७,१५१; काठ० १६,१४३ । (५।१३) काठ० ३८,१५६ । (५।१५-१६) ऋ० १०,१०१,३-४; वा० य० १२,६७-६८; अथर्व० ३,१७ १-२; मै० २,७,१५४—५५; काठ० १६,१४४-४५ । (५।१७) वा० य० १२,७१; अथर्व० ३,१७,३; मै० २,७,१५६; काठ० १६,१४८ । (५।१८) ऋ० ४,५७,८; वा० य० १२,६९; अथर्व० ३,१७,५; मै० २,७,१५७; काठ० १६,१४७ (५।१९) वा० य० १२,७२; मै० २,७,१८८; काठ० १६,१५१ ।

घृतेन सीता मधुना समक्ता विश्वैर्देवैरनुमता मरुद्भिः।
ऊर्जस्वती पयसा पिन्वमानाऽस्मान्त्सीते पयसाऽभ्याववृत्स्व[२०] ॥
(समोकसौ, विश्वरूपे,-त्रिदुर्निर्ऋतिं,- रभि चेष्ट, इह, मित्राय, द्वाविंशतिश्च २२) ॥५॥

कृष्टायां भुवि ओषधिवापः ॥ अनुष्टुप्, ९ बृहती।

या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा। मन्दामि बभ्रूणामहं शतं धामानि सप्त च[१] ॥
शतं वो अम्ब धामानि सहस्रमुत वो रुहः। अथा शतक्रत्वो यूयमिमं मे अगदं कृत[२] ॥
पुष्पावतीः प्रसूवतीः फलिनीरफला उत। अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः[३] ॥
ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे। रपांसि विघ्नतीरित रपः-(१) श्चातयमानाः ॥
अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता। गोभाज इत् किलासथ यत् सनवथ पूरुषम् ॥
यदहं वाजयन्निमा ओषधीर्हस्त आदधे। आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥
यदोषधयः सङ्गच्छन्ते राजानः समिताविव। विप्रः स उच्यते भिषग्रक्षोहाऽमीवचातनः ॥
निष्कृतिर्नाम वो माताऽथा यूयं स्थ संकृतीः।
सराः पतत्रिणीः (२) स्थन यदामयति निष्कृत ॥
अन्या वो अन्यामवत्वन्याऽन्यस्या उपावत।
ताः सर्वा ओषधयः संविदाना इदं मे प्रावता वचः[९] ॥
उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते। धनं सनिष्यन्तीनामात्मानं तव पूरुष ॥
अति विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः।
ओषधयः प्राचुच्यवुर्यत् किं च तनुवां रपः[११] ॥
या-(३)-स्त आतस्थुरात्मानं या आविविशुः परुःपरुः।
तास्ते यक्ष्मं वि बाधन्तामुग्रो मध्यमशीरिव[१२] ॥
साकं यक्ष्म प्र पत श्येनेन किकिदीविना। साकं वातस्य ध्राज्या साकं नश्य निहाकया[१३] ॥
अश्वावतीं सोमवतीमूर्जयन्तीमुदोजसम्। आ वित्सि सर्वा ओषधीरस्मा अरिष्टतातये[१४] ॥

---

(५।२०) वा० य० १२,७०; अथर्व० ३,१७,९; मै० २,७,१६०; काठ० १६,१४९। (६।१-५) ऋ० १०,९७ १-५, वा० य० १२,७५-७९, मै० २,७,१६६—७०; काठ० १६,१५२-५६। (६।६) ऋ० १०,९७,११; वा० य० १२,८५, मै० २,७,१७४; काठ० १६,१६२। (६।७) ऋ० १०,९७,६, वा० य० १२,८०; मै० २,७,१७१, काठ० १६,१५८। (६।८) ऋ० १०,९७,९; वा० य० १२,८३; मै० २,७,१७२; काठ० १६,१६३। (६।९) ऋ० १०,९७,१४; वा० य० १२,८८, मै० २,७,१७९; काठ० १६,१६५। (६।१०) ऋ० १०,९७,८; वा० य० १२,८२, मै० २,७,१७१; काठ० १६,१५९। (६।११) ऋ० १०,९७,१०; वा० य० १२,८४; मै० २,७,१७३, काठ० १६,१६०। (६।१२-१३) ऋ० १०,९७,१२-१३; वा० य० १२,८६-८७, मै० २,७,१७७-७८; काठ० १६,१६१, १६४। (६।१४) ऋ० १०,९७,७; वा० य० १२,८१; मै० २,७,१७३; काठ० १६,१५७।

याः फ॒लिनी॒र्या अ॑फ॒ला अ॑पु॒ष्पा याश्च॑ पु॒ष्पिणीः॑ ।
बृह॒स्पति॑प्रसूता॒स्ता नो॑ मुञ्च॒न्त्व१ꣳह॑सः ॥
या (४) ओष॑धयः॒ सोम॑राज्ञीः॒ प्रवि॑ष्टाः पृथि॒वीमनु॑ ।
तासा॒ꣳ त्वम॑स्युत्त॒मा प्र णो॑ जी॒वात॑वे सुव ॥
अ॒व॒पत॑न्तीरवदन् दि॒व ओष॑धयः॒ परि॑ । यं जी॒वम॒श्नवा॑महै॒ न स रि॑ष्याति॒ पूरु॑षः ।
याश्चे॒दमु॑पशृ॒ण्वन्ति॒ याश्च॑ दू॒रं परा॑गताः । इ॒ह स॒ङ्गत्य॒ ताः सर्वा॑ अ॒स्मै सं द॑त्त भेष॒जम् ॥
मा वो॑ रिषत् खनि॒ता यस्मै॑ चा॒हं खना॑मि वः (५) ।
द्वि॒पच्चतु॑ष्पद॒स्माक॒ꣳ सर्व॑मस्त्वना॒तुर॑म् ॥
ओष॑धयः॒ सं व॑दन्ते॒ सोमे॑न स॒ह राज्ञा॑ । यस्मै॑ क॒रोति॑ ब्राह्म॒णस्त॒ꣳ रा॑जन् पारयामसि ॥
(रंहसः, पत्रिणी,- यीं, या, नो, ऽष्टादश च १८) ॥६॥

ऽोष्ठक्षेपादिक्रम् ॥ १,४,१३ त्रिष्टुप्; २ उष्णिक्, ३,१२ गायत्री; ५,८ विष्टारपङ्क्तिः; ६-७,१० सतोबृहती; ९ उपरिष्टाज्ज्योतिः ।

मा नो॑ हिꣳसीज्जनि॒ता यः पृ॑थि॒व्या यो वा॒ दिव॒ꣳ स॒त्यध॑र्मा ज॒जान॑ ।
यश्चा॒पश्च॒न्द्रा बृ॑ह॒तीर्ज॒जान॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥
अ॒भ्याव॑र्तस्व पृथिवि य॒ज्ञेन॒ पय॑सा स॒ह । व॒पां ते॑ अ॒ग्निरि॑षि॒तोऽव॑त् सर्पतु ॥
अग्ने॒ यत् ते॑ शु॒क्रं यच्च॒न्द्रं यत् पू॒तं यद्य॒ज्ञिय॑म् । तद्दे॒वेभ्यो॑ भरामसि ॥
इष॒मूर्ज॑म॒हमि॒त आ (१) द॑द ऋ॒तस्य॒ धाम्नो॑ अ॒मृत॑स्य॒ योनेः॑ ।
आ नो॒ गोषु॑ विश॒त्वौष॑धीषु॒ जहा॑मि से॒दिमनि॑रा॒मम॑मीवाम् ॥
अग्ने॒ तव॒ श्रवो॒ वयो॒ महि॑ भ्राजन्त्य॒र्चयो॑ विभावसो ।
बृह॑द्भानो॒ शव॑सा॒ वाज॑मु॒क्थ्य॑ꣳ दधा॑सि दा॒शुषे॑ कवे ॥
इ॒र॒ज्यन्न॑ग्ने प्रथयस्व ज॒न्तुभि॑र॒स्मे रायो॑ अमर्त्य ।
स द॑र्श॒तस्य॒ वपु॑षो॒ वि रा॑जसि पृ॒णक्षि॑ सान॒सिꣳ र॒यिम् ॥

---

(६।१५) ऋ० १०,९७,१५; वा० य० १२,८९; मै० २,७,१८०; काठ० १६,१६७; (६।१६) ऋ० १०,९७,१९; वा० य० १२,९३ । (६।१७) ऋ० १०,९७,१७; वा० य० १२,९१; अथर्व० ६,१०९,२ (उत्तरार्धः); मै० २,७,१८१; काठ० १६,१६६ । (६।१८) ऋ० १०,९७,२१; वा० य० १२,९४; काठ० १६,१६८ । (६।१९) ऋ० १०,९७,२०; वा० य० १२,९५ । (६।२०) ऋ० १०,९७,२२; वा० य० १२,९६ । (७।१) ऋ० १०,१२१,९; वा० य० १२,१०२; मै० २,७,१८४; काठ० १६,१७० । (७।२-४) वा० य० १२,१०३-५; मै० २,७,१८५-८७; काठ० १६,१७१-७३ । (७।५) ऋ० १०,१४०,१; वा० य० १२,१०६; सा० १८१६; मै० २,७,१८९; काठ० १६,१७४ । (७।६) ऋ० १०,१४०,४; वा० य० १२,१०९; सा० १८१९; मै० २,७,१९१; काठ० १६,१७७ ।

ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व (२) धीतिभिर्हितः ।
त्वे इषः सं दधुर्भूरिरेतसश्चित्रोतयो वामजाताः ॥
पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रः पितरा विचरन्नुपावस्युभे पृणक्षि रोदसी ॥
ऋतावानं महिषं विश्वचर्षणिमग्निꣳ सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्णꣳ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥
निष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तꣳ राधसे महे ।
राति भृगूणामुशिजं कविक्रतुं पृणक्षि सानसिं (३) रयिम् ॥
चितः स्थ परिचित ऊर्ध्वचितः श्रयध्वं तया देवतयाऽङ्गिरस्वद् ध्रुवाः सीदत ॥
आ प्यायस्व समेतु ते विश्वतः सोम वृष्णियम् । भवा वाजस्य सङ्गथे[१२] ॥
सं ते पयाꣳसि समु यन्तु वाजाः सं वृष्णियान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्व[१३] ॥
(आ, मन्दस्व, सानसि,- मेकान्नचत्वारिꣳशच्च ३९) ॥७॥

अश्वाक्रमणपुष्करपर्णोपधानरुक्मोपधानादि ॥ १-६ त्रिष्टुप्; ७-९ अनुष्टुप् ।

अभ्यस्थाद्विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह ।
बृहस्पतिः सविता तन्म आह पूषा माऽधात् सुकृतस्य लोके ॥
यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् ।
श्येनस्य पक्षा हरिणस्य बाहू उपस्तुतं जनिम तत् ते अर्वन् ॥
अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् ।
वर्धमानं मह (१) आ च पुष्करं दिवो मात्रया वरिणा प्रथस्व[३] ॥
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
स बुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥

---

(७।७) ऋ० १०,१४०,३; वा० य० १२,१०८; सा० १८१८; मै० २,७,१९२; काठ० १६,१७६ । (७।८) ऋ० १०,१४०,२; वा० य० १२,१०७; सा० १८१७; मै० २,७,१९०; काठ० १६,१७१ । (७।९) ऋ०१०,१४०,६; वा० य०१२,१११; सा० १८२१; मै० २,७,१९३; काठ० १६,१७८ । (७।१०) ऋ० १०,१४०,५; वा० य० १२,११०; सा०१८२०; मै० २,७,१९४; काठ० १६,१७९ । (७।११) वा० य० १२,४६ (च० पा०); ५३; मै० २,७,१३९; काठ० १६,१२५, १३२ । (७।१२-१३) ऋ० १,९१,१६,१८; ९,३१,४; वा० य० १२,११२-१३; सा० ६०३; मै० २,७,१९५-९६; काठ० १६,१८०-८१ । (८।१) अथर्व० १०,५,३६ (द्वि० पा०); १६,९,१-२; मै० १,५,३०; ६,२०; काठ० ३९,२ । (८।२) ऋ० १,१६३,१; वा० य० २९,१२, मै० १,६,१७; काठ० ३९,१; ४०,३५ । (८।३) वा० य० १३,२; मै० २,७,३१; काठ० १६,१८२ । (८।४) वा० य० १३,३; अथर्व० ४,१,१; ५,६,१; मै० २,७,१९७; काठ० १६,१८३ ।

*

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
द्रप्सश्चस्कन्द पृथिवीमनु (२) द्यामिमं च योनिमनु यश्च पूर्वः ।
तृतीयं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः[६] ॥
नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः[७] ॥
येऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सु सदः कृतं तेभ्यः सर्पेभ्यो नमः[८] ॥
या इषवो यातुधानानां (३) ये वा वनस्पतीꣳरनु । ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः[९] ॥
(मह्यो,ऽनु, यातुधानाना,- मेकादश च ११) ॥८॥

स्वयमातृण्णाद्युपधानम् ॥ १ बृहती; ३-४,१४ अनुष्टुप्; ७-११,१६-१७ गायत्री; १३ नष्टरूपी; १८,२१-२२ त्रिष्टुप् ।

ध्रुवाऽसि धरुणाऽस्तृता विश्वकर्मणा सुकृता ।
मा त्वा समुद्र उद्वधीन्मा सुपर्णो व्यथमाना पृथिवीं दृꣳह ॥

प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे व्यचस्वतीं प्रथस्वतीं प्रथोऽसि पृथिव्यसि भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै (१) चरित्रायाग्निस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद[२] ॥

काण्डात्काण्डात् प्ररोहन्ती परुषःपरुषः परि । एवा नो दूर्वे प्र तनु सहस्रेण शतेन च[३] ॥
या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्यास्ते देवीष्टके विधेम हविषा वयम्[४] ॥
अषाढाऽसि सहमाना सहस्वारातीः सहस्वारातीयतः सहस्व पृतनाः सहस्व पृतन्यतः ।
सहस्रवीर्या (२) असि सा मा जिन्व[६] ॥
मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः[७] ॥
मधु नक्तमुतोषसि मधुमत् पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता ॥
मधुमान् नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः[१०] ॥
तद्विष्णोः परमं (३) पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्[११] ॥

---

(८।५-६) ऋ० १०,१२१,१; १०,१७,११; वा० य० १३,४-५; मै० २,७,१९८,२००; काठ० १६,१८४-८५ । (८।७-९) ऋ० परि० १५,११,९-१०; वा० य० १३,६,८,७; मै० २,७,२०१,२०३,२०२; काठ० १६,१८६,१८८,१८७ । (९।१-४) वा० य० १३,१६-२१; मै० २,७,२१०,२१२,२१४-१५; काठ० १६,१९७-९९ । (९।५-९) ऋ० १,९०, ६-८; वा० य० १३,२६-२९; मै० २,७,२१९-२२; काठ० १६,२०२; ३९,२७-२९ । (९।१०) तै० सं० ३,५,११,१० । (९।११) ऋ० १,२२,२०; वा० य० ६,५; अथर्व० ७,२६,७; सा० १६७२; मै० १,२,९९; काठ० ३,१६ ।

ध्रुवाऽसि पृथिवि सहस्व पृतन्यतः । स्यूता देवेभिरमृतेनाऽऽ ऽगाः[१२] ॥
यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः ।
ताभिः सर्वाभी रुचे जनाय नस्कृधि[१३] ॥
या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते[१४] ॥
विराड् (४) ज्योतिरधारयत् सम्राड् ज्योतिरधारयत् स्वराड् ज्योतिरधारयत्[१५] ॥
अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्त्याशवः[१६] ॥
युक्ष्वा हि देवहूतमाꣳ अश्वाꣳ अग्ने रथीरिव । नि होता पूर्व्यः सदः[१७] ॥
द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
तृतीयं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त (५) होत्राः[१८] ॥
अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य च ।
अग्निर्ज्योतिषा ज्योतिष्मान् रुक्मो वर्चसा वर्चस्वान्[१९] ॥
ऋचे त्वा रुचे त्वा समित् स्रवन्ति सरितो न धेनाः ।
अन्तर्हृदा मनसा पूयमानाः ॥
घृतस्य धारा अभि चाकशीमि । हिरण्ययो वेतसो मध्य आसाम्[२१] ॥
तस्मिन्त्सुपर्णो मधुकृत् कुलायी भजन्नास्ते मधु देवताभ्यः ।
तस्याऽऽसते हरयः सप्त तीरे (६) स्वधां दुहाना अमृतस्य धाराम्[२२] ॥
(प्रतिष्ठायै, सहस्रवीर्या, परमं, विराट्, सप्त, तीरे, चत्वारि च ८) ॥९॥

पशुशीर्षोपधानम् ॥ त्रिष्टुप्, ६,८,१० अष्टिः ।

आदित्यं गर्भं पयसा समञ्जन्त्सहस्रस्य प्रतिमां विश्वरूपम् ।
परि वृङ्ग्धि हरसा माऽभि मृक्षः शतायुषं कृणुहि चीयमानः ॥
इमं मा हिꣳसीर्द्विपादं पशूनाꣳ सहस्राक्ष मेध आ चीयमानः ।
मयुमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥

---

(९।१३-१४) वा० य० १३,२२-२३; मै० २,७,२१६-१७; काठ० १६,२००-२०१ । (९।१५) वा० य० १३,२४; मै० २,७,२१८; काठ० १६,२०२ । (९।१६-१७) ऋ० ६,१६,४३; ८,७५,१; वा० य० १३,३६-३७; मै० २,७,२३५-३६; काठ० २२,११-१२ । (९।१८) तै० सं० ४,२,८,६ । (९।१९-२१) ऋ० ४,५८,६ (पूर्वार्धः); वा० य० १३,३८-४०; मै० २,७,२३७—३८; काठ १६,२०५—६ । (१०।१) वा० य० १३,४१; मै० २,७,२३९; काठ० १६,२०७ । (१०।२) वा० य० १३,४७; मै० २,७,२४४; काठ० १६,२१२ ।

वातस्य ध्राजिं वरुणस्य नाभिमश्वं जज्ञानꣳ सरिरस्य मध्ये ।
शिशुं नदीनाꣳ हरिमद्रिबुद्धमग्ने मा हिꣳसीः (१) परमे व्योमन्न् ॥
इमं मा हिꣳसीरेकशफं पशूनां कनिक्रदं वाजिनं वाजिनेषु ।
गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥
अजस्रमिन्दुमरुषं भुरण्युमग्निमीडे पूर्वचित्तौ नमोभिः ।
स पर्वभिर्ऋतुशः कल्पमानो गां मा हिꣳसीरदितिं विराजम् ॥
इमꣳ समुद्रꣳ शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये ।
घृतं दुहानामदितिं जनायाग्ने मा (२) हिꣳसीः परमे व्योमन् ।
गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥
वरूत्रिं त्वष्टुर्वरुणस्य नाभिमविं जज्ञानाꣳ रजसः परस्मात् ।
महीꣳ साहस्रीमसुरस्य मायामग्ने मा हिꣳसीः परमे व्योमन् ॥
इमामूर्णायुं वरुणस्य मायां त्वचं पशूनां द्विपदां चतुष्पदाम् ।
त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिꣳसीः परमे व्योमन् ।
उष्ट्रमारण्यमनु (३) ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥
यो अग्निरग्नेस्तपसोऽधि जातः शोचात् पृथिव्या उत वा दिवस्परि ।
येन प्रजा विश्वकर्मा व्यानट् तमग्ने हेडः परि ते वृणक्तु ॥
अजा ह्यग्नेरजनिष्ट गर्भात् सा वा अपश्यज्जनितारमग्रे ।
तया रोहमायन्नुप मेध्यासस्तया देवा देवतामग्र आयन् ।
शरभ-(४)-मारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥

(हिꣳसी,- मां, ऽनु, शरभं, नव च) ॥१०॥

याज्यानुवाक्याः ॥ गायत्री; २,६,१० त्रिष्टुप् ।

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यम् ॥
श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात् ।
इरज्यन्ता वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता[२] ॥

---

(१०।३) वा० य० १३,४३; मै० २,७,२४०; काठ० १६,२०८। (१०।४) वा० य० १३,४८; मै० २,७,२४४; काठ० १६,२१४। (१०।५) वा० य० १३,४३; मै० २,७.२४१; काठ० १६,२०९। (१०।६) वा० य० १३,४९; मै० २,७,२४४-४५; काठ० १६,२१६-१७। (१०।७) वा० य० १३,४४; मै० २,७,२४२; काठ० १६,२१०। (१०।८) वा० य० १३,५०; मै० २,७,२४५; काठ० १६,२१९-२०। (१०।९) वा० य० १३,४५; मै० २,७,२४३; काठ० १६,२११। (१०।१०) वा० य० १३,५१; अथर्व० ४,१४,१; ९,५,१३; मै० २,७,२४६; काठ० १६,२२१-२३। (११।१) ऋ० ३,१२,९; सा० १६९३; मै० ४,१०,१००; ११,१; काठ० ४,१६। (११।२) ऋ० ६,६०,१; मै० ४,१०,११६; काठ० ४,१७

प्र चर्षणिभ्यः पृतना हवेषु प्र पृथिव्या रिरिचाथे दिवश्च ।
प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनाऽत्यन्या[७] ॥
मरुतो यस्य हि (१) क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः[८] ॥
यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनाम् । मरुतः शृणुता हवम्[९] ॥
श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः ।
ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः[१०] ॥
अव ते हेडः[११] उदुत्तमम्[१२] ॥
कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता (२) ॥
को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून् हृत्स्वसो मयोभून् य एषां भृत्यामृणधत् स जीवात्[१०] ॥
अग्ने नया[११]—ऽऽ देवानाम्[१२] शं नो भवन्तु[१३] वाजेवाजे[१४] ॥
अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे । गर्भे सञ्जायसे पुनः[१५] ॥
वृषा सोम द्युमाँ२ असि वृषा देव वृषव्रतः । वृषा धर्माणि दधिषे[१६] ॥
इमं मे (३) वरुण[१७] तत्त्वा यामि[१८] त्वं नो अग्ने[१९] स त्वं नो अग्ने[२०] ॥
(हि, वृता, म, एकादश च ११) ॥११॥

[ विष्णो— २६६।— दिवो २०८ । ऽग्नापूते २१६ । ऽप्र १९८ । सं ३२२ । या २६८ । मा १८९ । ऽभि १६१ । ध्रुवा २०४ । ऽऽदित्य—२०९ ।— मिन्द्राग्नी १६१ । ( एकादश ॥११॥२४९८ ) ]

[ ॥ इति चतुर्थकाण्डे द्वितीयः प्रपाठकः ॥२॥ ]

---

(११।३) ऋ० १,१०९,६; मै० ४,१०,१०१; काठ० ४,१०५ । (११।४) ऋ० १,८६,१; वा० य० ८,३१; अथर्व० २०,१,२ । (११।५) ऋ० १,८६,२ । (११।६) ऋ० १,८७,६; मै० ४,११,७६; काठ० ८,७३ । (११।७-८) ऋ० १,२४,१४-१५; वा० य० १२,१२; अथर्व० ७,८३,३; १८,४,६९; सा० ५८९; मै० ४,१०,१०६-७; काठ० ४०,९०-९१। (११।९) ऋ० ४,३१,१; वा० य० २७,३९; ३६,४; सा० १६९; ६८२; अथर्व० २०,१२४,१; मै० ४,९,२५०, काठ० ३९, ६७ । (११।१०) ऋ० १,८४,१६; सा० ३४१; अथर्व० १८,१,६; मै० ३,१६,६९; काठ० [ अश्वमेधः ] ५, २५ । (११।११-१४) ऋ० १,१८९,१; १०,२,३; ७,३८,७-८; वा० य० ३,३६; ९,१६,१८; २१,१०-११; मै० १, ११,१०-११; ४,१०,५८-५९,९०; काठ० ३,४; २,१११; १३,५१-५१ । (११।१५) ऋ० ८,४३,९; वा० य० १२,३६; मै० २,७,१२४; काठ० २,८१ । (११।१६) ऋ० ९,६४,१; सा० ५०४; मै० ४,१०,४६; काठ० २,७१ । (११।१७-२०) ऋ० १,२५,१९; २४,११; ४,१,४-५; वा० य० २१,१-४; सा० १५८५; मै० ४,१४,२५२-५३,२५६-५७; काठ० ४,१४०-४१; ४०,९१-९३; ११,४०; ३४,३८-३९ ।

## चितिवर्णनम् ।

[ अथ तृतीयः प्रपाठकः ॥३॥ ] अग्निर्ऋषिः ।

प्रथमचितौ अपस्याभिधानेष्टकोपधानम् ॥

अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयाम्यपां त्वा भस्मन्त्सादयाम्यपां त्वा ज्योतिषि सादयाम्यपां त्वाऽयने सादयाम्यर्णवे सदने सीद समुद्रे सदने सीद सलिले सदने सीदापां क्षये सीदापाꣳ सधिषि सीदापां त्वा सदने सादयाम्यपां त्वा सधस्थे सादयाम्यपां त्वा पुरीषे सादयाम्यपां त्वा योनौ (१) सादयाम्यपां त्वा पाथसि सादयामि[3] गायत्री छन्दस्त्रिष्टुप् छन्दो जगती छन्दोऽनुष्टुप् छन्दः पङ्क्तिश्छन्दः[4] ॥ (योनौ, पञ्चदश च १५) ॥१॥

प्रथमचितौ प्राणभृदिष्टकोपधानम् ॥

अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्रियै गायत्रं गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत् त्रिवृतो रथन्तरꣳ रथन्तराद्वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यो[1] ऽयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणं ग्रीष्मो मानसस्त्रिष्टुग्ग्रैष्मी त्रिष्टुभ ऐडमैडादन्तर्यामोऽन्तर्यामात् पञ्चदशः पञ्चदशाद्बृहद् बृहतो भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनो (१) गृह्णामि प्रजाभ्यो[2] ऽयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाणि चाक्षुषाणि जगती वार्षी जगत्या ऋक्षममृक्षमाच्छुक्रः शुक्रात् सप्तदशः सप्तदशाद्वैरूपं वैरूपाद्विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्य[3] इदमुत्तरात् सुवस्तस्य श्रोत्रꣳ सौवꣳ शरच्छ्रौत्र्यनुष्टुप्छारद्यनुष्टुभः स्वारꣳ स्वारान्मन्थी मन्थिन एकविꣳश एकविꣳशाद् वैराजं वैराजाज्जमदग्निर्ऋषिः प्रजापतिगृहीतया (२) त्वया श्रोत्रं गृह्णामि प्रजाभ्य[4] इयमुपरि मतिस्तस्यै वाङ्माती हेमन्तो वाच्यायनः पंक्तिर्हैमन्ती पंक्त्यै निधनवन्निधनवत आग्रयण आग्रयणात् त्रिणवत्रयस्त्रिꣳशौ त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवते शाक्वररैवताभ्यां विश्वकर्मर्षिः प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः[5] ॥

(मनः, प्रजापतिगृहीतया, त्रिꣳशच्च ३०) ॥२॥

प्रथमचितौ अपानभृदिष्टकोपधानम् ॥

प्राची दिशां वसन्त ऋतूनामग्निर्देवता ब्रह्म द्रविणं त्रिवृत् स्तोमः स उ पञ्चदशवर्तनिस्त्र्यविर्वयः कृतमयानां पुरोवातो वातः सानग ऋषि[1] र्दक्षिणा दिशां ग्रीष्म ऋतूनामिन्द्रो देवता क्षत्रं द्रविणं पञ्चदशः स्तोमः स उ सप्तदशवर्तनिर्दित्यवाड्वयस्त्रेताऽयानां दक्षिणाद्वातो वातः सनातन ऋषिः[2] प्रतीची दिशां वर्षा ऋतूनां विश्वे देवा देवता विट् (१) द्रविणꣳ सप्तदशः स्तोमः स उ एकविꣳशवर्तनिस्त्रिवत्सो

(१।१-४) वा० य० १३,५३; मै० २,७,२४७; काठ० १६,२२५ । (२।१-५) वा० य० १३,५४-५८; मै० २,७,२४८; काठ० १६,२२६ । (३।१-६) वा० य०१५,१०-१४; अथर्व० ५,२४,१५-१७; मै० २,७,२४९-५१ ।

वयो द्वापरोऽयानां पश्चाद्वातो वातोऽहभूनऋषि[3] रुदीची दिशा शरदृतूनां मित्रावरुणौ देवता पुष्टं द्रविणमेकविꣳशः स्तोमः स उ त्रिणववर्तनिस्तुर्यवाड् वय आस्कन्दोऽयानामुत्तराद्वातो वातः प्रत्न ऋषि[4] रूर्ध्वा दिशा हेमन्तशिशिरावृतूनां बृहस्पतिर्देवता वर्चो द्रविणं त्रिणवः स्तोमः स उ त्रयस्त्रिꣳशवर्तनिः पष्ठवाद्वयो (२) ऽभिभूरयानां विष्वग्वातो वातः सुपर्ण ऋषिः[5] पितरः पितामहाः परेऽवरे ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याम्[6] ॥ (विड्, वयो, ऽष्टाविꣳशतिश्च २८) ॥३॥

द्वितीयाचितावाश्विन्यादीष्टकोपधानम् ॥

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवाऽसि ध्रुवां योनिमा सीद साध्या ।
उख्यस्य केतुं प्रथमं पुरस्तादश्विनाऽध्वर्यू सादयतामिह त्वा[7] ॥
स्वे दक्षे दक्षपितेह सीद देवत्रा पृथिवी बृहती रराणा ।
स्वासस्था तनुवा सं विशस्व पितेवैधि सूनव आ सुशेवाऽश्विनाऽध्वर्यू सादयतामिह त्वा[12] ॥
कुलायिनी वसुमती वयोधा रयिं नो वर्ध बहुलꣳ सुवीरम् (१) ।
अपामतिं दुर्मतिं बाधमाना रायस्पोषे यज्ञपतिमाभजन्ती सुवर्धेहि यजमानाय पोषमश्विनाऽध्वर्यू सादयतामिह त्वा[3] ॥
अग्नेः पुरीषमसि देवयानी तां त्वा विश्वे अभि गृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणा ऽऽयजस्वाश्विनाऽध्वर्यू सादयतामिह त्वा[4] ॥
दिवो मूर्धाऽसि पृथिव्या नाभिर्विष्टम्भनी दिशामधिपत्नी भुवनाना-(२)-
मूर्मिर्द्रप्सो अपामसि विश्वकर्मा त ऋषिरश्विनाऽध्वर्यू सादयतामिह त्वा[5] ॥
सजूरृतुभिः सजूर्विधाभिः सजूर्वसुभिः सजू रुद्रैः सजूरादित्यैः सजूर्विश्वैर्देवैः सजूर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा[6] ॥

प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्म उर्व्या (३) वि भाहि श्रोत्रं मे श्लोकय[7] अपस्पिन्वौषधीर्जिन्व द्विपात् पाहि चतुष्पादव दिवो वृष्टिमेरय ॥ (सुवीरं, भुवनाना,- मुर्व्या, सप्तदश च १७) ॥४॥

---

(३।६) अस्मिन् ब्रह्मण्य०...। अथर्व० ५,२४,१-१७। (४।१) वा० य० १४,१; मै० २,८,३; काठ० १७,१। (४।२) वा० य० १४,३; मै० २,८,५; काठ० १७,३। (४।३) वा० य० १७,५४; मै० २,१०,४५; काठ० १८,२२। (४।४) वा०य० १४,४; १५,३; मै० २,८,६,१८; काठ० १७,४। (४।५) वा०य० १४,५; मै० २,८,७; काठ० १७,५ (उत्तरार्धः)-६। (४।६-८) वा० य० १४,७-८; मै० २,८,८-९; काठ० १७,७-९।

द्वितीयचितौ वयस्याख्येष्टकोपधानम् ॥

त्र्यविर्वयस्त्रिष्टुप् छन्दो[1] दित्यवाड् वयो विराट् छन्दः[2] पञ्चाविर्वयो गायत्री छन्द[3]स्त्रि-वत्सो वय उष्णिहा छन्द[4]स्तुर्यवाड् वयोऽनुष्टुप् छन्दः[5] पष्ठवाड्वयो बृहती छन्द[6] उक्षा वयः सतोबृहती छन्द[7] ऋषभो वयः ककुच्छन्दो[8] धेनुर्वयो जगती छन्दो[9]ऽनड्वान् वयः पङ्क्ति-श्छन्दो[10] बस्तो वयो विवलं छन्दो[11] वृष्णिर्वयो विशालं छन्दः पुरुषो वय-(१)-स्तन्द्रं छन्दो[12] व्याघ्रो वयोऽनाधृष्टं छन्दः[14] सिꣳहो वयश्छदिश्छन्दो[15] विष्टम्भो वयोऽधिपतिश्छन्दः[16] क्षत्रं वयो मयन्दं छन्दो[17] विश्वकर्मा वयः परमेष्ठी छन्दो[18] मूर्धा वयः प्रजापतिश्छन्दः[19] ॥
(वयः, षड्विꣳशतिश्च २६) ॥५॥

तृतीयचितौ स्वयमातृण्णाद्युपधानम् ॥

इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतं युवम् । पृष्ठेन द्यावापृथिवी अन्तरिक्षं च वि बाधताम्[1] ॥ विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीं भास्वतीꣳ सूरिमतीमा या द्यां भास्या पृथिवीमोर्वन्तरिक्षमन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायो-दानाय प्रतिष्ठायै चरित्राय वायुस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा (१) शन्तमेन तया देवतया-ऽङ्गिरस्वद् ध्रुवा सीद[2] ॥
राज्ञ्यसि प्राची दिग्[3] विराडसि दक्षिणा दिक्[4] सम्राडसि प्रतीची दिक्[5] स्वराडस्युदीची दिगधिपत्न्य[6]सि बृहती दि[7]गायुर्मे पाहि[8] प्राणं मे पाह्य[9]पानं मे पाहि[10] व्यानं मे पाहि[11] चक्षुर्मे पाहि[12] श्रोत्रं मे पाहि[13] मनो मे जिन्व[14] वाचं मे पिन्व[15]-(२)-ऽऽत्मानं मे पाहि[16] ज्योतिर्मे यच्छ[17] ॥ (छर्दिषा, पिन्व, षट् च ६) ॥६॥

तृतीयचितौ बृहत्याद्युपधानम् ॥

मा छन्दः[1] प्रमा छन्दः[2] प्रतिमा छन्दो[3]ऽस्रीविश्छन्दः[4] पङ्क्तिश्छन्द[5] उष्णिहा छन्दो[6] बृहती छन्दो[7]ऽनुष्टुप् छन्दो[8] विराट् छन्दो[9] गायत्री छन्द[10]स्त्रिष्टुप् छन्दो[11] जगती छन्दः[12] पृथिवी छन्दो[13]ऽन्तरिक्षं छन्दो[14] द्यौश्छन्दः[15] समाश्छन्दो[16] नक्षत्राणि छन्दो[17] मनश्छन्दो[18] वाक् छन्दः[19] कृषिश्छन्दो[20] हिरण्यं छन्दो[21] गौश्छन्दो[22]ऽजा छन्दो[23]ऽश्वश्छन्दः[24] ॥
अग्निर्देवता[25] (१) वातो देवता[26] सूर्यो देवता[27] चन्द्रमा देवता[28] वसवो देवता[29] रुद्रा देवता[30]ऽऽदित्या देवता[31] विश्वे देवा देवता[32] मरुतो देवता[33] बृहस्पतिर्देवते[34]न्द्रो देवता[35] वरुणो देवता[36] मूर्धाऽसि राड्[37] ध्रुवाऽसि धरुणा[38] यन्त्र्यसि यमित्री[39]षे त्वो[40]र्जे त्वा[41] कृष्यै त्वा[42]

---

(५।१-१९) वा० य० १४,९-१० (व्युत्क्रमेण); मै० २,८,१; काठ० १७,१०। (६।१-१७) वा० य० १४,११-१४, १७; मै० २,८,१०-११; काठ० १७,११-१२। (७।१-५०) वा० य० १४,१८-२२; मै० २,८,११; काठ० १७,१२।

क्षेमाय त्वा[3] यन्त्री राड्[4] ध्रुवाऽसि धरणी[5] धर्त्र्यसि धरित्र्या[6]युषे त्वा[7] (२) वर्चसे त्वौ[8]जसे त्वा[9] बलाय त्वा[10] ॥ (देवता, त्वा, षट् च ६) ॥७॥

चतुर्थचितौ स्तोमीयाख्येष्टकासु कासाञ्चिदुपधानम् ॥

आशुस्त्रिवृद्[1]भ्रान्तः पञ्चदशो[2] व्योम सप्तदशः[3] प्रतूर्तिरष्टादश[4]स्तपो नवदशो[5]ऽभिवर्तः सविꣳशो[6] धरुण एकविꣳशो[7] वर्चो द्वाविꣳशः[8] सम्भरणस्त्रयोविꣳशो[9] योनिश्चतुर्विꣳशो[10] गर्भाः पञ्चविꣳशा[11] ओजस्त्रिणवः[12] क्रतुरेकत्रिꣳशः[13] प्रतिष्ठा त्रयस्त्रिꣳशो[14] ब्रध्नस्य विष्टपं चतुस्त्रिꣳशो[15] नाकः षट्त्रिꣳशो[16] विवर्तोऽष्टाचत्वारिꣳशो[17] धर्त्रश्चतुष्टोमः[18] ॥ (आशुः सप्तत्रिꣳशत् ३७) ॥८॥

अवशिष्टस्तोमीयोपधानम् ॥

अग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत् स्तोम[1] इन्द्रस्य भागोऽसि विष्णोराधिपत्यं क्षत्रꣳ स्पृतं पञ्चदशः स्तोमो[2] नृचक्षसां भागोऽसि धातुराधिपत्यं जनित्रꣳ स्पृतꣳ सप्तदशः स्तोमो[3] मित्रस्य भागोऽसि वरुणस्याऽऽधिपत्यं दिवो वृष्टिर्वाताः स्पृता एकविꣳशः स्तोमो[4]ऽदित्यै भागोऽसि पूष्ण आधिपत्यमोजः स्पृतं त्रिणवः स्तोमो[5] वसूनां भागोऽसि (१) रुद्राणामाधिपत्यं चतुष्पात् स्पृतं चतुर्विꣳशः स्तोम[6] आदित्यानां भागोऽसि मरुतामाधिपत्यं गर्भाः स्पृताः पञ्चविꣳशः स्तोमो[7] देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यꣳ समीचीर्दिशः स्पृताश्चतुष्टोमः स्तोमो[8] यावानां भागोऽस्ययावानामाधिपत्यं प्रजाः स्पृताश्चतुश्चत्वारिꣳशः स्तोम[9] ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यं भूतं निशान्तꣳ स्पृतं त्रयस्त्रिꣳशः स्तोमः[10] ॥
(वसूनां भागोऽसि, षट्चत्वारिꣳशच्च ४६) ॥९॥

सृष्ट्यभिधेयेष्टकोपधानम् ॥

एकयाऽस्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्[1] तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत्[2] पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत्[3] सप्तभिरस्तुवत सप्तर्षयोऽसृज्यन्त धाताऽधिपतिरासी[4]न्नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासी[5]देकादशभिरस्तुवतर्तवोऽसृज्यन्ताऽऽर्तवोऽधिपतिरासीत्[6] त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपति-(१)-रासीत्[7] पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत्[8] सप्तदशभिरस्तुवत पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासी[9]न्नवदशभिरस्तुवत शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नी आस्ता[10]मेकविꣳशत्यास्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत्[11] त्रयोविꣳशत्याऽस्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाऽधिपतिरासीत्[12] पञ्चविꣳशत्याऽस्तुवताऽऽरण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत्[13] सप्तविꣳशत्याऽस्तुवत द्यावापृथिवी व्यै-(२)-तां वसवो रुद्रा आदित्या अनु व्यायन्

---

(८।१-१८) वा० य० १४,२३; मै० २,८,१२; काठ० १७,१३। (९।१-१०) वा० य० १४,२४-२६; मै० २,८,१३; काठ० १७,१३। (१०।१-१७) वा० य० १४,२८-३१; मै० २,८,१४; काठ० १७,१४।

*

तेषामाधिपत्यमासी[14]न्नवविꣳशत्याऽस्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासी[15]देकत्रिꣳशताऽस्तुवत प्रजा असृज्यन्त यावानां चायावानां चाऽऽधिपत्यमासीत्[16] त्रयस्त्रिꣳशताऽस्तुवत भूतान्यशाम्यन् प्रजापतिः परमेष्ठ्यधिपतिरासीत् ॥ (अधिपति,-र्वि, पञ्चत्रिꣳशच्च ३५) ॥१०॥

चतुर्थचितौ व्युष्टिपंक्तेष्टकोपधानम् ॥ त्रिष्टुप्; २,४ जगती; १३ अनुष्टुप् ।

इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा ।
वधूर्जजान नवगज्जनित्री त्रय एनां महिमानः सचन्ते[1] ॥
छन्दस्वती उषसा पेपिशाने समानं योनिमनु सञ्चरन्ती ।
सूर्यपत्नी वि चरतः प्रजानती केतुं कृण्वाने अजरे भूरिरेतसा[2] ॥
ऋतस्य पन्थामनु तिस्र आऽगुस्त्रयो घर्मासो अनु ज्योतिषाऽऽऽगुः ।
प्रजामेका रक्षत्यूर्जमेका (१) व्रतमेका रक्षति देवयूनाम्[3] ॥
चतुष्टोमो अभवद्या तुरीया यज्ञस्य पक्षावृषयो भवन्ती ।
गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्कं युञ्जानाः सुवराऽभरन्निदम्[4] ॥
पञ्चभिर्धाता वि दधाविदं यत् तासाꣳ स्वसॄरजनयत् पञ्चपञ्च ।
तासामु यन्ति प्रयवेण पञ्च नाना रूपाणि क्रतवो वसानाः ॥
त्रिꣳशत् स्वसार उप यन्ति निष्कृतꣳ समानं केतुं प्रतिमुञ्चमानाः (२) ।
ऋतूꣳस्तन्वते कवयः प्रजानतीर्मध्येछन्दसः परि यन्ति भास्वतीः[6] ॥
ज्योतिष्मती प्रति मुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि ।
वि पश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे[7] ॥
एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् ।
तेन दस्यून् व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः[8] ॥
अनानुजामनुजां मामकर्त सत्यं वदन्त्यन्विच्छ एतत् ।
भूयास-(३)-मस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्र युक्त[9] ॥
अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम् ।
भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्र युक्त[10] ॥
पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च ।
पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभि लोकमेकम्[11] (४) ॥

(११।१) अथर्व० ८,९,११-१४; मै० २,१३,७३-७६; काठ० ३९,५१-५४ । (११।५-७) मै० २,१३,७७,८३-८४; काठ० ३९,५५,५८,५७ । (११।८-९) काठ० ३९,६२-६३ । (११।१०) मै० २,१३,८०; काठ० ३९,६४ । (११।११) अथर्व० ८,९,१५; मै० २,१३,८१; काठ० ३९,५६ ।

ऋतस्य गर्भः प्रथमा व्यूषुष्यपामेका महिमानं बिभर्ति ।
सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकां नि यच्छति[१२] ॥
या प्रथमा व्यौच्छत् सा धेनुरभवद्यमे ।
सा नः पयस्वती धुक्ष्वोत्तरामुत्तराᳫं समाम्[१३] ॥
शुक्रर्षभा नभसा ज्योतिषाऽऽऽगाद्विश्वरूपा शबलीरग्निकेतुः ।
समानमर्थᳫं स्वपस्यमाना बिभ्रती जरामजर उष आऽगाः[१४] ॥
ऋतूनां पत्नी (५) प्रथमेयमाऽगादह्नां नेत्री जनित्री प्रजानाम् ।
एका सती बहुधोषो व्युच्छस्यजीर्णा त्वं जरयसि सर्वमन्यत्[१५] ॥
(एका, प्रतिमुञ्चमाना, भूयास,- मेकं, पत्न्ये,- क्षात्रिᳫंशतिश्च १९) ॥११॥

पञ्चमचितावसपत्नाख्येष्टकोपधानम्॥ १-२ त्रिष्टुप्।

अग्ने जातान् प्र णुदा नः सपत्नान् प्रत्यजाताञ्जातवेदो नुदस्व ।
अस्मे दीदिहि सुमना अहेडन् तव स्याᳫं शर्मन् त्रिवरूथ उद्भितौ ॥
सहसा जातान् प्र णुदा नः सपत्नान् प्रत्यजाताञ्जातवेदो नुदस्व ।
अधि नो ब्रूहि सुमनस्यमानो वयᳫं स्याम प्र णुदा नः सपत्नान्[२] ॥

चतुश्चत्वारिᳫंशः स्तोमो वर्चो द्रविणᳫं षोडशः स्तोम ओजो द्रविणं पृथिव्याः पुरीषमस्य-(१)-प्सो नाम[५] । एवश्छन्दो[६] वरिवश्छन्दः[७] शम्भूश्छन्दः[८] परिभूश्छन्द[९] आच्छच्छन्दो[१०] मनश्छन्दो[११] व्यचश्छन्दः[१२] सिन्धुश्छन्दः[१३] समुद्रं छन्दः[१४] सलिलं छन्दः[१५] संयच्छन्दो[१६] वियच्छन्दो[१७] बृहच्छन्दो[१८] रथन्तरं छन्दो[१९] निकायश्छन्दो[२०] विवधश्छन्दो[२१] गिरश्छन्दो[२२] भ्रजश्छन्दः[२३] सᳫंष्टुप् छन्दो[२४] ऽनुष्टुप् छन्दः[२५] ककुच्छन्द[२६]—स्त्रिककुच्छन्दः[२७] काव्यं छन्दो[२८] ऽङ्कुपं छन्दः[२९] (२) पदपङ्क्तिश्छन्दो[३०] ऽक्षरपङ्क्तिश्छन्दो[३१] विष्टारपङ्क्तिश्छन्दः[३२] क्षुरो भृज्वान् छन्दः[३३] प्रच्छच्छन्दः[३४] पक्षश्छन्द[३५] एवश्छन्दो[३६] वरिवश्छन्दो[३७] वयश्छन्दो[३८] वयस्कृच्छन्दो[३९] विशालं छन्दो[४०] विष्पर्धाश्छन्द[४१]—श्छदिश्छन्दो[४२] दूरोहणं छन्द[४३]—स्तन्द्रं छन्दो[४४] ऽङ्काङ्कं छन्दः[४५] ॥ (अग्ने, छन्द,-स्त्रयस्त्रिᳫंशच्च३३)॥१२॥

---

(११।१२) मै० २,१३,७८; काठ० ३९,६१। (११।१३) अथर्व० ३,१०,१; मै० २,१३,८५; काठ० ३९,६५। (११।१४) काठ ३९,५९। (११।१५) मै० २,१३,७१, काठ० ३९,६०। (१२।१-२) वा० य० १५,१—२; अथर्व० ७,३४,१; ३५,१; मै० २,८,१४—१५; काठ० १७,१५-१६। (१२।३ ५) वा० य० १५,३, १४,४ (प्र० पा०) मै० २, ८,१७-१८ (प्र० पा०); २,८,६ (प्र० पा०); काठ० १७,१७-१८ (प्र० पा०)। (१२।६—४५) वा० य० १५,४-५; मै० २,८,१९, काठ० १७,१९।

साकमेधादियाज्यानुवाक्याः ॥ गायत्री: ३-७,११-१४,१९,२३-२५ त्रिष्टुप्; २०-२१ विराट् ।

अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः[1] ॥
त्वꣳ सोमासि सत्पतिस्त्वꣳ राजोत वृत्रहा । त्वं भद्रो असि क्रतुः[2] ॥
भद्रा ते अग्ने स्वनीक संदृग्घोरस्य सतो विषुणस्य चारुः ।
न यत् ते शोचिस्तमसा वरन्त न ध्वस्मानस्तनुवि रेप आ धुः[3] ॥
भद्रं ते अग्ने सहसिन्ननीकमुपाक आ रोचते सूर्यस्य (१) ।
रुशद् दृशे ददृशे नक्तया चिदरूक्षितं दृश आ रूपे अन्नम्[4] ॥
सेनाऽनीकेन सुविदत्रो अस्मे यष्टा देवाꣳ आयजिष्ठः स्वस्ति ।
अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद् दिदीहि[5] ॥
स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव ।
यत् सीमहि दिविजात प्रशस्तं तदस्मासु द्रविणं धेहि चित्रम्[6] ॥
यथा होतर्मनुषो (२) देवताता यज्ञेभिः सूनो सहसो यजासि ।
एवा नो अद्य समना समानानुशन्नग्न उशतो यक्षि देवान्[7] ॥
अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारꣳ रत्नधातमम्[8] ॥
वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः । वृषा धर्माणि दधिषे[9] ॥
सान्तपना इदꣳ हविर्मरुतस्तज्जुजुष्टन । युष्माकोती रिशादसः[10] ॥
यो नो मर्तो वसवो दुर्हृणायुस्तिरः सत्यानि मरुतो (३) जिघाꣳसात् ।
द्रुहः पाशं प्रति स मुचीष्ट तपिष्ठेन तपसा हन्तना तम्[11] ॥
संवत्सरीणा मरुतः स्वर्का उरुक्षयाः सगणा मानुषेषु ।
तेऽस्मत् पाशान् प्र मुञ्चन्त्वꣳहसः सान्तपना मदिरा मादयिष्णवः[12] ॥
पिप्रीहि देवाꣳ उशतो यविष्ठ विद्वाꣳ ऋतूꣳरृतुपते यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वꣳ होतॄणामस्यायजिष्ठः[13] ॥

---

(१३।१) ऋ० ६,१६,३४; वा० य० ३३,९; सा० ४,१३९६; मै० ४,१०,१; काठ० २,६६ । (१३।२) ऋ० १,९१,५; मै० ४,१०,२; काठ० २,६७ । (१३।३) ऋ० ४,६,६ । (१३।४) ऋ० ४,११,१ । (१३।५) ऋ० २,९,६; मै० ४, १०,११२; काठ० २१,४९ । (१३।६) ऋ० १०,७,१ । (१३।७) ऋ० ६,४,१ । (१३।८) ऋ० १,१,१; मै० ४,१०, ११०; काठ० २,८८ । (१३।९) ऋ० ९ ६४,१; सा० ५०४,७८१; मै० ४,१०,४६; काठ० २,७१ । (१३।१०) ऋ० ७,५९,९; अथर्व० ७,७७,१; मै० ४,१०,११४; काठ० २१,५० । (१३।११) ऋ० ७,५९,८; अथर्व० ७,७७,२; मै० ४,१०,११५; काठ० २१,५१ । (१३।१२) अथर्व० ७,७७,३ । (१३।१३) ऋ० १०,२,१; मै० ४,१०,४; काठ० २,१११ ।

अग्ने यदद्य विशो अध्वरस्य होतः पावक (४) शोचे वेष्ट्वꣳ हि यज्वा ।
ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्य [14] ॥
अग्निना रयिमश्नवत् पोषमेव दिवेदिवे । यशसं वीरवत्तमम् [15] ॥
गयस्फानो अमीवहा वसुवित् पुष्टिवर्धनः । सुमित्रः सोम नो भव [16] ॥
गृहमेधास आ गत मरुतो माऽप भूतन । प्रमुञ्चन्तो नो अꣳहसः [17] ॥
पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वयम् । महोभि-(५)-श्चर्षणीनाम् [18] ॥
प्र बुध्निया ईरते वो महाꣳसि प्र णामानि प्रयज्यवस्तिरध्वम् ।
सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम् [19] ॥
उप यमेति युवतिः सुदक्षं दोषा वस्तोर्हविष्मती घृताची । उप स्वैनमरमतिर्वसूयुः [20] ॥
इमो अग्ने वीततमानि हव्याऽजस्रो वक्षि देवतातिमच्छ ।
प्रति न ईꣳ सुरभीणि वियन्तु [21] ॥
क्रीडं वः शर्धो मारुतमनर्वाणꣳ रथेशुभम् (६) । कण्वा अभि प्र गायत [22] ॥
अत्यासो न ये मरुतः स्वञ्चो यक्षदृशो न शुभयन्त मर्याः ।
ते हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्रीडिनः पयोधाः [23] ॥
प्रैषामज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते शुभे ।
ते क्रीडयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त धूतयः [24] ॥
उपह्वरेषु यदचिध्वं ययिं वय इव मरुतः केन (७) चित् पथा ।
श्चोतन्ति कोशा उप वो रथेष्वा घृतमुक्षता मधुवर्णमर्चते [25] ॥
अग्निमग्निꣳ हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् [26] ॥
तꣳ हि शश्वन्त ईडते स्रुचा देवं घृतश्चुता । अग्निꣳ हव्याय वोढवे [27] ॥
इन्द्राग्नी रोचना दिवः [28] श्नथद्वृत्र [29]—मिन्द्रं वो विश्वतस्परी [30]—न्द्रं नरो [31] विश्वकर्मन् हविषा

(१३।१४) ऋ० ६,१५,१४; मै० ४,१०,५ । (१३।१५) ऋ० १,१,३; मै० ४,१०,९८ । (१३।१६) ऋ० १,९१,१२; यो रेवान्यो...। वा० य० ३,२९ (पूर्वार्धः); मै० ४,१०,९९; काठ० २,७३ । (१३।१७) ऋ० ७,५९,१०; मै० ४,१०,११७; काठ० २१,५२ । (१३।१८) ऋ० १,८६,६ । (१३।१९) ऋ० ७,५६,१४; मै० ४,१०,११८; काठ० २१,५३ । (१३।२०) ऋ० ७,१,६ । (१३।२१) ऋ० ७,१,१८; मै० ४,१०,२४; काठ० ३५,९ । (१३।२२–२३) ऋ० १,३७,१; ७,५६,१६; मै० ४,१०,१२२–२३; काठ० २१,५४–५५ । (१३।२४) ऋ० १,८७,३; मै० ४,११,७८ । (१३।२५) ऋ० १,८७,२ । (१३।२६) ऋ० १,१२,२; सा० ७९१; अथर्व० २०,१०१,२; मै० ४,१०,२७ । (१३।२७) ऋ० ५,१४,३; मै० ४,१०,२६; काठ० १९,३४ । (१३।२८–३३) ऋ० ३,१२,९; ६,६०,१; १,७,१०; ७,२७,१; १०,८१,६; वा० य० १७,२२,२४; अथर्व० २०,३९,१; ७०,१६; सा० १६९३,१६२०,३१८,१५८९; मै०४,१०,१००,११६; ११,९४; १२,६७; २,१०,२०–२१; काठ० ४,९६–९७; ८,७४; १८,१५–१६ ।

वावृधानो[२१] विश्वकर्मन् हविषा वर्धनेन[३३] ॥
(सूर्यस्य, गर्भुषो, मरुतः, पावक, महोभी, रथेशुभं, केतु, षट्चत्वारिꣳशच्च ४६) ॥१३॥

[अपा-६५।-मर्थं १३०। प्राची ५२८। ध्रुवाक्षिति-१६७।-स्यवि-७६।-रिन्द्राग्नी १०६। मा १०६। ऽऽह्व३७।-हमे-२६। -रेकये १३५।-म-२६९। मग्ने १३३। ऽग्नि-३९६। (-स्त्रयोदश ॥१३॥ १८४४)]

[ ॥ इति चतुर्थकाण्डे तृतीयः प्रपाठकः ॥३॥ ]

## पञ्चमचितिशेषनिरूपणम् ।

[ अथ चतुर्थः प्रपाठकः ॥४॥ ] अग्निर्ऋषिः ।
पञ्चमचितिशेषस्तोमभागाख्येष्टकोपधानम् ॥

रश्मिरसि क्षयाय त्वा क्षयं जिन्व प्रेतिरसि धर्माय त्वा धर्मं जिन्वान्वितिरसि दिवे त्वा दिवं जिन्व सन्धिरस्यन्तरिक्षाय त्वाऽन्तरिक्षं जिन्व प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्व प्रवाऽस्यह्ने त्वाऽहर्जिन्वा[१]नुवाऽसि रात्रियै त्वा रात्रिं जिन्वोशिगसि (१) वसुभ्यस्त्वा वसूञ्जिन्व प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व सुदीतिरस्यादित्येभ्यस्त्वाऽऽदित्याञ्जिन्वौजोऽसि पितृभ्यस्त्वा पितॄञ्जिन्व तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व पृतनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्व[२] रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वाभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वाधिपतिरसि प्राणाय (२) त्वा प्राणं जिन्व यन्ताऽस्यपानाय त्वाऽपानं जिन्व सꣳसर्पोऽसि चक्षुषे त्वा चक्षुर्जिन्व वयोधा असि श्रोत्राय त्वा श्रोत्रं जिन्व त्रिवृदसि[३] प्रवृदसि संवृदसि विवृदसि सꣳरोहोऽसि नीरोहोऽसि प्ररोहोऽस्यनुरोहोऽसि[४] वसुकोऽसि वेषश्रिरसि वस्यष्टिरसि[५] ॥
(असि, प्राणाय, त्रिचत्वारिꣳशच्च ४३) ॥१॥

नाकसदाख्येष्टकोपधानम् ॥

राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतयोऽग्निर्हेतीनां प्रतिधर्ता त्रिवृत् त्वा स्तोमः पृथिव्याꣳ श्रयत्वाज्यमुक्थमव्यथयत् स्तभ्नातु रथन्तरꣳ साम प्रतिष्ठित्यै[१] विराडसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतय इन्द्रो हेतीनां प्रतिधर्ता पञ्चदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु प्रउगमुक्थमव्यथयत् स्तभ्नातु बृहत् साम प्रतिष्ठित्यै[२] सम्राडसि प्रतीची दि-(१)-गादित्यास्ते देवा अधिपतयः सोमो हेतीनां प्रतिधर्ता सप्तदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु मरुत्वतीयमुक्थमव्यथयत् स्तभ्नातु वैरूपꣳ साम प्रतिष्ठित्यै[३] स्वराडस्युदीची दिग्विश्वे ते देवा अधिपतयो वरुणो हेतीनां प्रतिधर्तैकविꣳशस्त्वा

(१।१-५) वा० य० १५,६-७,९; मै० २,८,१०; काठ० १७,२०। (२।१-५) वा० य० १५,१०-१४; मै० २,८,११; काठ० १७,२१।

स्तोमः पृथिव्याꣳ श्रयतु निष्केवल्यमुक्थमव्यथयत् स्तभ्नातु वैराजꣳ साम प्रतिष्ठित्या[४] अधिपत्न्यसि बृहती दिङ्मरुतस्ते देवा अधिपतयो (२) बृहस्पतिर्हेतीनां प्रतिधर्ता त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयतां वैश्वदेवाग्निमारुते उक्थे अव्यथयन्ती स्तभ्नीताꣳ शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्षायर्षयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे सुवर्गे लोके यजमानं च सादयन्तु[५] ॥

(दि,– गधिपतय,– श्चत्वारिꣳशच्च ४०) ॥२॥

चोडाख्येष्टकोपधानम् ॥ ८ त्रिष्टुप् ।

अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानिग्रामण्यौ पुञ्जिकस्थला च कृतस्थला चाप्सरसौ यातुधाना हेती रक्षाꣳसि प्रहेति[१]रयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानिग्रामण्यौ मेनका च सहजन्या चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेति[२]रयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानिग्रामण्यौ प्रम्लोचन्ती चा (१) नुम्लोचन्ती चाप्सरसौ सर्पा हेतिर्व्याघ्राः प्रहेति[३]रयमुत्तरात् संयद्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानिग्रामण्यौ विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेति[४]रयमुपर्यर्वाग्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानिग्रामण्यावुर्वशी च पूर्वचित्तिश्चाप्सरसौ विद्युद्धेतिरवस्फूर्जन् प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु ते यं (२) द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधाम्या[५]योस्त्वा सदने सादयाम्यवतश्छायायां नमः समुद्राय नमः समुद्रस्य चक्षसे[६] परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यचस्वतीं प्रथस्वतीं विभूमतीं प्रभूमतीं परिभूमतीं दिवं यच्छ दिवं दृꣳह दिवं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय सूर्यस्त्वाऽभि पातु मह्या स्वस्त्या (३) छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद[७] ॥

प्रोथदश्वो न यवसे अविष्यन् यदा महः संवरणाद् व्यस्थात् ।
आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति[८] ॥

(च, यꣳ, स्वस्त्या, ऽष्टाविꣳशतिश्च २८) ॥३॥

छन्दोभिधेष्टकोपधानम् ॥ १-३ गायत्री; ४-६ त्रिष्टुप्; ७-९ जगती; १०-१२ अनुष्टुप्; १३-१५ बृहती; १४ सतोबृहती; १६-१८ उष्णिक्; १९-२१ पङ्क्तिः; २२-२५ अक्षरपङ्क्तिः; २६ अत्यष्टिः; २७-२९ द्विपदा ।

अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति[१] ॥
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः[२] ॥
अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम्[३] ॥

---

(३।१-५) वा० य० १५,१५-१९; मै० २,८,२२; काठ० १७,२२ । (३।६-७) वा० य० १५,६३-६४; मै० २,८, ३१,३३; काठ० १७,२३,२५ । (३।८) ऋ० ७,३,२; सा० १२२०; मै० २,८,३२; काठ० १७,२४ । (४।१,४) तै० सं० ४,१,११,३-४ । (४।२-३) ऋ० ६,१६,१३; ८,७५,४; वा० य० १५,२१-२२; सा० ९; मै० २,७,२०९; १३,३३; काठ० १६,२८,१९५ ।

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे सुवर्षां जिह्वामग्ने चकृषे हव्यवाहम्[४] ॥
अबोध्यग्निः समिधा जनानां (१) प्रति धेनुमिवाऽऽयतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ[५] ॥
अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे ।
गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुर्व्यञ्चमश्रेत्[६] ॥
जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः[७] ॥
त्वामग्ने अङ्गिरसो (२) गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने ।
स जायसे मथ्यमानः सहो महत् त्वामाहुः सहसस्पुत्रमङ्गिरः[८] ॥
यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समिन्धते ।
इन्द्रेण देवैः सरथꣳ स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः[९] ॥
त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे[१०] ॥
सखायः सं वः सम्यञ्चमिषꣳ (३) स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते[११] ॥
सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इडस्पदे समिध्यसे स नो वसून्या भर[१२] ॥
एना वो अग्निं नमसोर्जो नपातमा हुवे ।
प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम्[१३] ॥
स योजते अरुषा विश्वभोजसा स दुद्रवत् स्वाहुतः ।
सुब्रह्मा यज्ञः सुशमी (४) वसूनां देवꣳ राधो जनानाम्[१४] ॥
उदस्य शोचिरस्थादाजुह्वानस्य मीढुषः ।
उद्धूमासो अरुषासो दिविस्पृशः समग्निमिन्धत नरः[१५] ॥
अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः[१६] ॥
स इधानो वसुष्कविरग्निरीडेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि[१७] ॥

---

(४।४-६) ऋ० ५,१,१,१२; वा० य० १५,२४-२५; अथर्व० १३,१,४६; सा० ७३; मै० २,१३,३४-३५ । (४।७-८) ऋ० ५,११,१,६; वा० य० १५,२७-२८; सा० १०७-८; मै० २,१३,३७-३८; काठ० ३९,९५-९६ । (४।९) ऋ० ५,११,२, सा० १०९; काठ० ३९,९७ । (४।१०-१३) ऋ० १,४५,६; ५,७,१; १०,१९१,१; ७,१६,१; वा० य० १५, ३१,२९-३०,३२; अथर्व० ६,६३,४; सा० ४५; मै० २,१३,४१,४०,४६; ४,११,१४; काठ० २,९९,९३,९२; ३९,१०७ । (४।१४) ऋ० ७ १६,२; वा० य० १५,३३-३४ (उत्तरार्धः); सा० ५५० । (४।१५) ऋ० ७,१६,३; काठ० ३९,१०९ । (४।१६-१७) ऋ० १,७९,४-५; वा० य० १५,३५-३६ सा० १५६१-६२ मै० २,१३,४९—५०; काठ० ३९,११०-१११।

क्षपो राजन्नुत त्मनाऽग्ने वस्तोरुतोषसः । स तिग्मजम्भ (५) रक्षसो दह प्रति[18] ॥
आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषꣳ स्तोतृभ्य आ भर[19] ॥
आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते ।
सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यꣳ हूयत इषꣳ स्तोतृभ्य आ भर[20] ॥
उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि ।
उतो न उत् पुपूर्या (६) उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आ भर[21] ॥
अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋध्यामा त ओहैः[22] ॥
अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ[23] ॥
आभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम । प्र ते दिवो न स्तनयन्ति शुष्माः[24] ॥
एभिर्नो अर्कैर्भवा नो अर्वाङ् (७) सुवर्न ज्योतिः । अग्ने विश्वेभिः सुमना अनीकैः[25] ॥
अग्निꣳ होतारं मन्ये दास्वन्तं वसोः सूनुꣳ सहसो जातवेदसम् । विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः[26] ॥
अग्ने त्वं नो अन्तमः । उत त्राता शिवो भव वरूथ्यः[27] ॥
तं त्वा शोचिष्ठ दीदिवः । सुम्नाय नूनमीमहे सखिभ्यः[28] ॥
वसुरग्निर्वसुश्रवाः (८) । अच्छा नक्षि द्युमत्तमो रयिं दाः[29] ॥

(जनानु,- मर्तिस्त्र, इषꣳ, सुशर्मा, तिग्मजम्भ, पुपूर्या, अर्वाङ्, वसुश्रवाः, पञ्च च ५) ॥४॥

सयुजादीष्टकोपधानम् ॥

इन्द्राग्निभ्यां त्वा सयुजा युजा युनज्म्या[1]—घाराभ्यां[2] तेजसा[3] वर्चसो[4]—क्थेभिः[5] स्तोमेभि[6]—श्छन्दोभी[7] रय्यै पोषाय सजातानां मध्यमस्थेयाय मया त्वा सयुजा युजा युनज्म्य[8]—म्बा[9] दुला[10] नितत्नि[11]—रभ्रयन्ती[12] मेघयन्ती[13] वर्षयन्ती[14] चुपुणीका नामासि प्रजापतिना त्वा विश्वाभिर्धीभिरुप दधामि[15] पृथिव्युदपुरमन्नेन विष्टा मनुष्यास्ते गोप्तारोऽग्निर्वियत्तोऽस्यां तामहं प्र पद्ये सा (१) मे शर्म च वर्म चा[16]—स्त्वधिद्यौरन्तरिक्षं ब्रह्मणा विष्टा मरुतस्ते गोप्तारो वायुर्वियत्तोऽस्यां

(४।१८) ऋ० १,७९,६; वा० य० १५,३७; सा० १५६३; मै० २,१३,५१; काठ० ३९,११२ । (४।१९-२१) ऋ० ५,६,४-५,९; वा० य० १५,४३; सा० १०२२-२४; अथर्व० १८,४,८८; मै० २,१३,४३,२०; काठ० ३९,१०१-२ । (४।२२-२३) ऋ० ४,१०,१-२; वा० य० १५,४४-४५; सा० ४३४; मै० २,१३,५२-५३; काठ० २०,३८ । (४।२४) ऋ० ४,१०,४; मै० २,१३,५४ । (४।२५-२९) ऋ० ४,१०,३; १,१२७,१; ५,२४,१,४,२; वा० य० १५,४६-४८; सा० १७७९,१८१३,११०७-९; अथर्व० २०,६७.३; मै० ४,१०,४१; २,१३,५५-५७; १,५,२८-२९ (पूर्वार्धः) काठ० २०,३७; २६,३८; ७,६-७ (पूर्वार्धः) । (५।१-१८) काठ० ४०,९,१५,२२-२३ ।

*

तामहं प्र पद्ये सा मे शर्म च वर्म चास्तु[17] द्यौरपराजिताऽमृतेन विष्टाऽऽदित्यास्ते गोप्तारः सूर्यो विधर्ता ऽस्यां तामहं प्र पद्ये सा मे शर्म च वर्म चास्तु[18] ॥ (मा, ऽष्टाचत्वारिंशच्च ४८) ॥५॥

विश्वज्योतिरादीष्टकोपधानम् ॥

बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छाग्निस्तेऽधिपति[1]र्विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छ वायुस्तेऽधिपतिः[2] प्रजापतिस्त्वा सादयतु दिवः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छ परमेष्ठी तेऽधिपतिः[3] पुरोवातसनिरस्य[4]भ्रसनिरसि[5] विद्युत्सनि- (१) रसि[6] स्तनयित्नुसनिरसि[7] वृष्टिसनिरस्य[8]ग्नेर्यान्यसि[9] देवानामग्नेयान्यसि[10] वायोर्यान्यसि[11] देवानां वायोयान्यस्य[12]न्तरिक्षस्य यान्यसि[13] देवानामन्तरिक्षयान्यस्य[14]न्तरिक्षमस्य[15]न्तरिक्षाय त्वा[16] सलिलाय त्वा[17] सर्णीकाय त्वा[18] सतीकाय त्वा[19] केताय त्वा[20] प्रचेतसे त्वा[21] विवस्वते त्वा[22] दिवस्त्वा[23] ज्योतिष आदित्येभ्यस्त्व[24]र्चे त्वा[25] रुचे त्वा[26] द्युते त्वा[27] (२) भासे त्वा[28] ज्योतिषे त्वा[29] यशोदां त्वा यशसि[30] तेजोदां त्वा तेजसि[31] पयोदां त्वा पयसि[32] वर्चोदां त्वा वर्चसि[33] द्रविणोदां त्वा द्रविणे सादयामि तेनर्षिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद[34] ॥ (विद्युत्सनि,- स्त्वै,- कान्त्रिंशच्च २९) ॥६॥

भूयस्कृदादीष्टकोपधानम् ॥

भूयस्कृदसि[1] वरिवस्कृदसि[2] प्राच्यस्यू[3]र्ध्वाऽस्य[4]न्तरिक्षसदस्यन्तरिक्षे सीदा[5]प्सुषदसि[6] श्येनसदसि[7] गृध्रसदसि[8] सुपर्णसदसि[9] नाकसदसि[10] पृथिव्यास्त्वा द्रविणे सादयाम्य[11]न्तरिक्षस्य त्वा द्रविणे सादयामि[12] दिवस्त्वा द्रविणे सादयामि[13] दिशां त्वा द्रविणे सादयामि[14] द्रविणोदां त्वा द्रविणे सादयामि[15] प्राणं मे पाह्य[16]पानं मे पाहि[17] व्यानं मे (१) पाह्या[18]युर्मे पाहि[19] विश्वायुर्मे पाहि[20] सर्वायुर्मे पाह्य[21]ग्ने यत् ते परꣳ हृन्नाम तावेहि सꣳ रभावहै पाञ्चजन्येष्वप्येध्यग्ने[22] यावा[23] अयावा[24] एवा[25] ऊमाः[26] सब्दः[27] सगरः[28] सुमेकः[29] ॥ (मे, द्वात्रिंशच्च ३२) ॥७॥

इन्द्राग्न्याख्येष्टकोपधानम् ॥

अग्निना विश्वाषाट्[1] सूर्येण स्वराट्[2] क्रत्वा शचीपति[3]र्ऋषभेण त्वष्टा[4] यज्ञेन मघवान्[5] दक्षिणया सुवर्गो[6] मन्युना वृत्रहा[7] सौहार्द्येन तनूधा[8] अन्नेन गयः[9] पृथिव्याऽसनो[10]दृग्भिर-

---

(६।१-३) वा० य० १३,२४, १४,१२,१४, मै० ४.९,२११-१२; काठ० ३९,२३; ४०,१५। (६।४-२४) मै० २,८,३०. काठ० २२,१३-१४। (६।२५-३४) वा० य० १३,३९; मै० २,१३,१०३.१०१; काठ० ३९,४७,१०१। (७।१-१५) मै० २,१३,१०१; काठ० ३९,४७। (७।१६-२१) वा० य० १४,८,१७; मै० २,८,९,११; काठ० १७,९,१२। (७।२२-२९) मै० २,१३,८९; काठ० २२,१४।

न्नादो[११] वषट्कारेणर्षः[१२] साम्ना तनूपा[१३] विराजा ज्योतिष्मान्[१४] ब्रह्मणा सोमपा[१५] गोभिर्यज्ञं दाधार[१६] क्षत्रेण मनुष्या[१७] नश्वेन च रथेन च वज्र्यृ[१८] तुभिः प्रभुः[१९] संवत्सरेण परिभूस्[२०] तपसाऽनाधृष्टः[२१] सूर्यः सन् तनूभिः[२२] ॥ (अग्निर्भाग्नवर्द्वाशत् ४९) ॥८॥

यज्ञतन्वाख्येष्टकोपधानम् ॥

प्रजापतिर्मनसाऽन्धोऽच्छेतो[१] धाता दीक्षायाः[२] सविता भृत्या[३] पूषा सोमक्रयण्यां[४] वरुण उपनद्धो[५] ऽसुरः क्रीयमाणो[६] मित्रः क्रीतः[७] शिपिविष्ट आसादितो[८] नरंधिषः प्रोह्यमाणो[९] ऽधिपतिरागतः[१०] प्रजापतिः प्रणीयमानो[११] ऽग्निराग्नीध्रे[१२] बृहस्पतिराग्नीध्रात् प्रणीयमानं[१३] इन्द्रो हविर्धाने[१४] ऽदितिरासादितो[१५] विष्णुरुपावह्रियमाणो[१६] ऽथर्वोपोत्तो[१७] यमोऽभिषुतो[१८] ऽपूतपा आधूयमानो[१९] वायुः पूयमानो[२०] मित्रः क्षीरश्रीर्[२१] मन्थी सक्तुश्री[२२] वैश्वदेव उन्नीतो[२३] रुद्र(१) आहुतो[२४] वायुरावृत्तो[२५] नृचक्षाः प्रतिख्यातो[२६] भक्ष आगतः[२७] पितृणां नाराशꣳसो[२८] ऽसुरात्तः[२९] सिन्धुरवभृथमवप्रयन्[३०] त्समुद्रोऽवगतः[३१] सलिलः प्रप्लुतः[३२] सुवरुदृचं गतः[३३] ॥

(रुद्र, एकत्रिꣳशतिश्च ३१) ॥९॥

नक्षत्रेष्टकोपधानम् ॥

कृत्तिका नक्षत्रमग्निर्देवताऽग्ने रुचः स्थ प्रजापतेर्धातुः सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा[१] रोहिणी नक्षत्रं प्रजापतिर्देवता[२] मृगशीर्षं नक्षत्रꣳ सोमो देवता[३] ऽऽर्द्रा नक्षत्रꣳ रुद्रो देवता[४] पुनर्वसू नक्षत्रमदितिर्देवता[५] तिष्यो नक्षत्रं बृहस्पतिर्देवता[६] ऽऽश्रेषा नक्षत्रꣳ सर्पा देवता[७] मघा नक्षत्रं पितरो देवता[८] फल्गुनी नक्षत्र-(१)-मर्यमा देवता[९] फल्गुनी नक्षत्रं भगो देवता[१०] हस्तो नक्षत्रꣳ सविता देवता[११] चित्रा नक्षत्रमिन्द्रो देवता[१२] स्वाती नक्षत्रं वायुर्देवता[१३] विशाखे नक्षत्रमिन्द्राग्नी देवता[१४] ऽनूराधा नक्षत्रं मित्रो देवता[१५] रोहिणी नक्षत्रमिन्द्रो देवता[१६] विचृतौ नक्षत्रं पितरो देवता[१७] ऽषाढा नक्षत्रमापो देवता[१८] ऽषाढा नक्षत्रं विश्वे देवा देवता[१९] श्रोणा नक्षत्रं विष्णुर्देवता[२०] श्रविष्ठा नक्षत्रं वसवो (२) देवता[२१] शतभिषङ्नक्षत्रमिन्द्रो देवता[२२] प्रोष्ठपदा नक्षत्रमज एकपाद्देवता[२३] प्रोष्ठपदा नक्षत्रमहिर्बुध्नियो देवता[२४] रेवती नक्षत्रं पूषा देवता[२५] ऽश्वयुजौ नक्षत्रमश्विनौ देवता[२६] ऽपभरणीर्नक्षत्रं यमो देवता[२७] पूर्णा पश्चा[२८] द्यत् ते देवा अदधुः[२९] ॥

(नक्षत्रं, वसवो,- स्त्रयस्त्रिꣳशच्च ३३) ॥१०॥

ऋतव्येष्टकोपधानम् ॥

मधुश्च माधवश्च वासन्तिकावृतू[१-२] शुक्रश्च शुचिश्च ग्रैष्मावृतू[३-४] नभश्च नभस्यश्च वार्षिकावृतू[५-६] इषश्चोर्जश्च शारदावृतू[७-८] सहश्च सहस्यश्च हैमन्तिकावृतू[९-१०] तपश्च तपस्यश्च शैशिरावृतू अग्नेरन्तःश्लेषोऽसि

---

(९।१-३३) वा० य० ८,५४-५९; काठ० ३४,१२-१४। (१०।१-२९) मै० २,१३,२०३; काठ० ३९,१०। (११।१-११) वा० य० १३,२५; १४,६,१५-१६,२७; मै० २,८,१४-१९; काठ० १७,१५-३०; ३५,५९; २२,१६ ।

कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः (१) येऽग्नयः समनसोऽन्तरा द्यावापृथिवी शैशिरावृतू अभि कल्पमाना इन्द्रमिव देवा अभि सं विशन्तु[११-१२] संयच्च प्रचेताश्चाग्नेः सोमस्य सूर्यस्योग्रा[१३] च भीमा च पितृणां यमस्येन्द्रस्य[१४] ध्रुवा च पृथिवी च देवस्य सवितुर्मरुतां वरुणस्य[१५] धर्त्री च धरित्री च मित्रावरुणयोर्मित्रस्य धातुः[१६] प्राची च प्रतीची च वसूनाꣳ रुद्राणा-(२)-मादित्यानां ते तेऽधिपतयस्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि[१७] सहस्रस्य प्रमा असि[१८] सहस्रस्य प्रतिमा असि[१९] सहस्रस्य विमा असि[२०] सहस्रस्योन्मा असि[२१] साहस्रोऽसि सहस्राय त्वेमा[२२] मे अग्न इष्टका धेनवः सन्त्वेका च शतं च सहस्रं चायुतं च (३) नियुतं च प्रयुतं चार्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्चेमा मे अग्न इष्टका धेनवः सन्तु षष्टिः सहस्रमयुतमक्षीयमाणा ऋतस्थाः स्थर्तावृधो घृतश्चुतो मधुश्चुत ऊर्जस्वतीः स्वधाविनीस्ता मे अग्न इष्टका धेनवः सन्तु विराजो नाम कामदुघा अमुत्रामुष्मिꣳल्लोके[२३] ॥ (सव्रता, रुद्राणां, च, पञ्चचत्वारि ꣳशच्च ४५) ॥११॥

अश्वमेधगतदशहविष्केष्टियाज्यानुवाक्याः ॥

समिद्दिशामाशया नः सुवर्विन्मधोरतो माधवः पात्वस्मान् ।
अग्निर्देवो दुष्टरीतुरदाभ्य इदं क्षत्रꣳ रक्षतु पात्वस्मान् ॥
रथन्तरꣳ सामभिः पात्वस्मान् गायत्री छन्दसां विश्वरूपा ।
त्रिवृन्नो विष्ठया स्तोमो अह्नाꣳ समुद्रो वात इदमोजः पिपर्तु[२] ॥
उग्रा दिशामभिभूतिर्वयोधाः शुचिः शुक्रे अहन्योजसीना ।
इन्द्राधिपतिः पिपृतादतो नो महि (१) क्षत्रं विश्वतो धारयेदम्[३] ॥
बृहत् साम क्षत्रभृद्वृद्धवृष्णियं त्रिष्टुभौजः शुभितमुग्रवीरम् ।
इन्द्र स्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष ॥
प्राची दिशाꣳ सहयशा यशस्वती विश्वे देवाः प्रावृषा ऽह्नाꣳ सुवर्वती ।
इदं क्षत्रं दुष्टरमस्त्वोजोऽनाधृष्टꣳ सहस्रियꣳ सहस्वत् ॥
वैरूपे सामन्निह तच्छकेम जगत्यैनं विक्ष्वा वेशयामः ।
विश्वे देवाः सप्तदशेन (२) वर्च इदं क्षत्रꣳ सलिलवातमुग्रम् ॥

---

(११।१३-१८) ते नो...जम्भे (दध्मः) दधामि। वा० य० १५,१५-१९; मै० २,१३,८९; काठ० १७,११। ११।१९-२३) वा० य० १५,६५; १७,२-३; मै० २,८,३३; काठ० १७,११; सहस्रं च०...चार्बुदं च। ऋ० परि० ३३,७ (द्वि० पा०)। (१२।१-१४) मै० ३,१६,५०-६१,६६-६७; काठ० २२,३६-४७,४९-५०। (१२।५—६)...वैरूपे सामन्०...। मै० ३,१६,५४ (उत्तरार्धः); इदं क्षत्रं०...। मै० ३,१६,५५ (पूर्वार्धः)।

धर्त्री दिशां क्षत्रमिदं दाधारोपस्थाऽऽशानां मित्रवदस्त्वोजः ।
मित्रावरुणा शरदाऽह्नां चिकित्नू अस्मै राष्ट्राय महि शर्म यच्छतम् ॥
वैराजे सामन्नधि मे मनीषाऽनुष्टुभा सम्भृतं वीर्यꣳ सहः ।
इदं क्षत्रं मित्रवदार्द्रदानु मित्रावरुणा रक्षतमाधिपत्यैः ॥
सम्राड् दिशाꣳ सहसाम्नी सहस्वत्यृतुर्हेमन्तो विष्ठया नः पिपर्तु ।
अवस्युवाता (२) बृहतीर्नु शक्वरीरिमं यज्ञमवन्तु नो घृताचीः ॥
सुवर्वती सुदुघा नः पयस्वती दिशां देव्यवतु नो घृताची ।
त्वं गोपाः पुरएतोत पश्चाद् बृहस्पते याम्यां युङ्ग्धि वाचम् ॥
ऊर्ध्वा दिशाꣳ रन्तिराशौषधीनाꣳ संवत्सरेण सविता नो अह्नाम् ।
रेवत् सामातिच्छन्दा उ छन्दोऽजातशत्रुः स्योना नो अस्तु[११] ॥
स्तोमत्रयस्त्रिꣳशे भुवनस्य पत्नि विवस्वद्वाते अभि नो (४) गृणाहि ।
घृतवती सवितराधिपत्यैः पयस्वती रन्तिराशा नो अस्तु[१२] ॥
ध्रुवा दिशां विष्णुपत्न्यघोराऽस्येशाना सहसो या मनोता ।
बृहस्पतिर्मातरिश्वोत वायुः सन्धुवाना वाता अभि नो गृणन्तु[१३] ॥
विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना जगतो विष्णुपत्नी ।
विश्वव्यचा इषयन्ती सुभूतिः शिवा नो अस्त्वदितिरुपस्थे[१४] ॥

वैश्वानरो न ऊत्या[१५] पृष्टो दिवि[१६] —नु नो (५) ऽद्यानुमति[१७] —रन्विदनुमते त्वं[१८] कया नश्चित्र आ भुवत्[१९] को अद्य युङ्क्ते[२०] ॥
(महि, सहदुशेना,- ऽवस्युवाता, नो, नु,- श्चतुर्दश च १४) ॥१२॥

[रश्मी १४३। राज्ञ्य- १४०।- य- १७८। -मग्नि- ४०५।- रिन्द्राग्निभ्यां ९८। बृहस्पति- १२९।- र्भूयस्कृ- ८२।- द्दग्निना ४९। प्रजापतिः ७१। कृत्तिका १३३। मधुः १९५। समिद् २६४। ( द्वादश ॥१२॥ १८८७ ॥ )]

[ ॥ इति चतुर्थकाण्डे चतुर्थः प्रपाठकः ॥४॥ ]

---

(१२।१४) ऋ० ९,८९,६ । (१२।१५) वा० य० १८,७२, २६,८; मै० ३,१६,६४; काठ० २१,५१ । (१२।१६) ऋ० १,९८,१; वा० य० १८,७३; मै० ३,१६,६५; काठ० २१,५१ । (१२।१७-१८) तै० सं० ३,३,११,११—१२ । (१२।१९) ऋ० ४,३१,१; वा० य० २७,३९; ३६,४; सा० १६९; अथर्व० २०,१२४,१; मै० ३,१६,६८; काठ० ३९,६७। (१२।२०) ऋ० १,८४,१६; सा० ३४१; अथर्व० १८,१,६; मै० ३,१६,१९; काठ० [अश्वमेधः] ५,२५ ।

## होमविधिनिरूपणम् ।

[ अथ पञ्चमः प्रपाठकः ॥५॥ ] अग्निर्ऋषिः ।

चित्यग्नौ रुद्रहोममन्त्राः (रुद्राध्यायः) ॥ १ अनुष्टुप्; ३ विषमपदा बृहती, ७ आस्तारपंक्तिः, ८ षट्पदा जगती ।

नमस्ते रुद्र मन्यव उतो त इषवे नमः । नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः[1] ॥

या त इषुः शिवतमा शिवं बभूव ते धनुः ।

शिवा शरव्या या तव तया नो रुद्र मृडय[2] ॥

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ।

तया नस्तनुवा शंतमया गिरिशन्ताभि चाकशीहि[3] ॥

यामिषुं गिरिशन्त हस्ते (१) बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत्[4] ॥

शिवेन वचसा त्वा गिरिशाच्छा वदामसि । यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत्[5] ॥

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।

अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः[6] ॥

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः ।

ये चेमां रुद्रा अभितो दिक्षु (२) श्रिताः सहस्रशोऽवैषां हेड ईमहे[7] ॥

असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृशन्नदृशन्नुदहार्यः ।

उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः[8] ॥

नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।

अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः[9] ॥

प्र मुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् । याश्च ते हस्त इषवः (३) परा ता भगवो वप[10] ॥

अवतत्य धनुस्त्वं सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखा शिवो नः सुमना भव[11] ॥

विज्यं धनुः कपर्दिनो विशल्यो बाणवां उत ।

अनेशन्नस्येषव आभुरस्य निषङ्गथिः[12] ॥

या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयाऽस्मान् विश्वतस्त्वमयक्ष्मया परि भुज[13] ॥

नमस्ते अस्त्वायुधायानातताय धृष्णवे ।

उभाभ्या-(४)-मुत ते नमो बाहुभ्यां तव धन्वने[14] ॥

परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्नि धेहि तम्[15] ॥

---

(तै०सं० ४।५।१—११) = वा० य० १६।१–६६; मै० २,९,१४–५३; काठ० १७,३३–७० । (१।५) ऋ० १०,१४१,४ (उत्तरार्धः); अथर्व० ३,२०,६ (उत्तरार्धः)। (१।६) अदृष्टान्त्सर्वा०...। १,१९१,८ (उत्तरार्ध·); यातूंश्च सर्वा०... । अथर्व० ४,९,९ (उत्तरार्धः) ।

(हस्तै, त्रिक्षिप्‌,- पंच, सुभाभ्यां, द्वाविं॑शतिश्च २२) ॥१॥

चित्यग्नौ होममन्त्राः ॥

नमो॒ हिर॑ण्यबाहवे सेना॒न्ये॑ दि॒शां च॒ पत॑ये॒ नमो॒ नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यः पशू॒नां पत॑ये॒ नमो॒ नमः॑ स॒स्पिञ्ज॑राय॒ त्विषी॑मते पथी॒नां पत॑ये॒ नमो॒ नमो॑ बभ्लु॒शाय॑ विव्या॒धिनेऽन्ना॑नां॒ पत॑ये॒ नमो॒ नमो॒ हरि॑केशायोपवी॒तिने॑ पु॒ष्टानां॒ पत॑ये॒ नमो॒ नमो॑ भ॒वस्य॑ हे॒त्यै जग॑तां॒ पत॑ये॒ नमो॒ नमो॑ रु॒द्राया॑ऽऽतता॒विने॒ क्षेत्रा॑णां॒ पत॑ये॒ नमो॒ नमः॑ सू॒तायाह॑न्त्याय॒ वना॑नां॒ पत॑ये॒ नमो॒ नमो॒ (१) रोहि॑ताय स्थ॒पत॑ये वृ॒क्षाणां॒ पत॑ये॒ नमो॒ नमो॑ म॒न्त्रिणे॑ वाणि॒जाय॒ कक्षा॑णां॒ पत॑ये॒ नमो॒ नमो॑ भुव॒न्तये॑ वारिवस्कृ॒तायौष॑धीनां॒ पत॑ये॒ नमो॒ नम॑ उ॒च्चैर्घो॑षायाऽऽक्र॒न्दय॑ते पत्ती॒नां पत॑ये॒ नमो॒ नमः॑ कृत्स्नवी॒ताय॒ धाव॑ते॒ सत्व॑नां॒ पत॑ये॒ नमः॑ ॥ (नम॒, एकान्नत्रिं॑शच्च २९) ॥२॥

चित्यग्नौ होममन्त्राः ॥

नमः॒ सह॑मानाय निव्या॒धिन॑ आव्या॒धिनी॑नां॒ पत॑ये॒ नमो॒ नमः॑ ककु॒भाय॑ निष॒ङ्गिणे॑ स्ते॒नानां॒ पत॑ये॒ नमो॒ नमो॑ निष॒ङ्गिण॑ इषुधि॒मते॒ तस्क॑राणां॒ पत॑ये॒ नमो॒ नमो॒ वञ्च॑ते परि॒वञ्च॑ते स्तायू॒नां पत॑ये॒ नमो॒ नमो॑ निचे॒रवे॑ परि॒च॒रायार॑ण्यानां॒ पत॑ये॒ नमो॒ नमः॑ सृका॒विभ्यो॒ जिघां॑सद्भ्यो मुष्ण॒तां पत॑ये॒ नमो॒ नमो॑ऽसि॒मद्भ्यो॒ नक्तं॒ चर॑द्भ्यः प्रकृ॒न्तानां॒ पत॑ये॒ नमो॒ नम॑ उष्णी॒षिणे॑ गिरिच॒राय॑ कुलु॒ञ्चानां॒ पत॑ये॒ नमो॒ नम॒ (१) इषु॑मद्भ्यो धन्वा॒विभ्य॑श्च वो॒ नमो॒ नम॑ आतन्वा॒नेभ्यः॑ प्रति॒दधा॑नेभ्यश्च वो॒ नमो॒ नम॑ आ॒यच्छ॑द्भ्यो विसृ॒जद्भ्य॑श्च वो॒ नमो॒ नमोऽस्य॑द्भ्यो॒ विध्य॑द्भ्यश्च वो॒ नमो॒ नम॒ आसी॑नेभ्यः॒ शया॑नेभ्यश्च वो॒ नमो॒ नमः॑ स्व॒पद्भ्यो॒ जाग्र॑द्भ्यश्च वो॒ नमो॒ नम॒स्तिष्ठ॑द्भ्यो॒ धाव॑द्भ्यश्च वो॒ नमो॒ नमः॑ स॒भाभ्यः॑ स॒भाप॑तिभ्यश्च वो॒ नमो॒ नमो॒ अश्वे॒भ्योऽश्व॑पतिभ्य-(२)-श्च वो॒ नमः॑ ॥ (नमो,ऽश्व॑पतिभ्य॒,- स्त्रीणि॑ च ३) ॥३॥

चित्यग्नौ होममन्त्राः ॥

नम॑ आव्या॒धिनी॑भ्यो वि॒विध्य॑न्तीभ्यश्च वो॒ नमो॒ नम॒ उग॑णाभ्यस्तृꣳह॒तीभ्य॑श्च वो॒ नमो॒ नमो॑ गृ॒त्सेभ्यो॑ गृ॒त्सप॑तिभ्यश्च वो॒ नमो॒ नमो॒ व्राते॑भ्यो॒ व्रात॑पतिभ्यश्च वो॒ नमो॒ नमो॑ ग॒णेभ्यो॑ ग॒णप॑तिभ्यश्च वो॒ नमो॒ नमो॒ विरू॑पेभ्यो वि॒श्वरू॑पेभ्यश्च वो॒ नमो॒ नमो॑ म॒हद्भ्यः॑ क्षुल्ल॒केभ्य॑श्च वो॒ नमो॒ नमो॑ र॒थिभ्यो॑ऽर॒थेभ्य॑श्च वो॒ नमो॒ नमो॒ रथे॑भ्यो॒ (१) रथ॑पतिभ्यश्च वो॒ नमो॒ नमः॒ सेना॑भ्यः सेना॒निभ्य॑श्च वो॒ नमो॒ नमः॑ क्ष॒त्तृभ्यः॑ संग्रही॒तृभ्य॑श्च वो॒ नमो॒ नम॒स्तक्ष॑भ्यो रथका॒रेभ्य॑श्च वो॒ नमो॒ नमः॒ कुला॑लेभ्यः क॒र्मारे॑भ्यश्च वो॒ नमो॒ नमः॑ पु॒ञ्जिष्टे॑भ्यो नि॒षादे॑भ्यश्च वो॒ नमो॒ नम॑ इषु॒कृद्भ्यो॑ धन्व॒कृद्भ्य॑श्च वो॒ नमो॒ नमो॑ मृग॒युभ्यः॑ श्व॒निभ्य॑श्च वो॒ नमो॒ नमः॒ श्वभ्यः॒ श्वप॑तिभ्यश्च (२) वो॒ नमः॑ ॥ (रथे॑भ्यः॒, श्वप॑तिभ्यश्च॒, द्वे च॑ २) ॥४॥

चित्यग्नौ होममन्त्राः ॥

नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च संवृध्वने च (१) नमो अग्रियाय च प्रथमाय च नम आशवे चाजिराय च नमः शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चावस्वन्याय च नमः स्रोतस्याय च द्वीप्याय च ॥ (संवृध्वने च, पञ्चविंशतिश्च २५) ॥५॥

चित्यग्नौ होममन्त्राः ॥

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमः श्लोक्याय चावसान्याय च नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च (१) नम आशुषेणाय चाऽऽशुरथाय च नमः शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च ॥ (प्रतिश्रवाय च, पञ्चविंशतिश्च २५) ॥६॥

चित्यग्नौ होममन्त्राः ॥

नमो दुन्दुभ्याय चाऽऽहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चाऽऽयुधिने च नमः स्वायुधाय च सुधन्वने च नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च (१) नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय चाऽऽतप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥ (वैशन्ताय च, त्रिꣳशच्च ३०) ॥७॥

चित्यग्नौ होममन्त्राः ॥

नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शङ्गाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमः शम्भवे च मयोभवे च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च (१) नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नम आतार्याय चाऽऽलाद्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय च प्रवाह्याय च ॥ (शिवतराय च, त्रिꣳशच्च ३०) ॥८॥

चित्यग्नौ होममन्त्राः ॥

नम इरिण्याय च प्रपथ्याय च[1] नमः किꣳशिलाय च क्षयणाय च[2] नमः कपर्दिने च पुलस्तये च[3] नमो गोष्ठ्याय च गृह्याय च[4] नमस्तल्प्याय च गेह्याय च[5] नमः काट्याय च गह्वरेष्ठाय च[6] नमो ह्रदय्याय च निवेष्प्याय च[7] नमः पाꣳसव्याय च रजस्याय च[8] नमः शुष्क्याय च हरित्याय च[9] नमो लोप्याय चोलप्याय च[10] (१) नम ऊर्व्याय च सूर्म्याय च[11] नमः पर्ण्याय च पर्णशद्याय च[12] नमोऽपगुरमाणाय चाभिघ्नते च[13] नम आक्खिदते च प्रक्खिदते च[14] नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो[15] नमो विक्षीणकेभ्यो[16] नमो विचिन्वत्केभ्यो[17] नम आनिर्हतेभ्यो[18] नम आमीवत्केभ्यः[19] ॥ (उलप्याय च, त्रयस्त्रिꣳशच्च ३३) ॥९॥

चित्यग्नौ होममन्त्राः ॥ १ आस्तारपंक्तिः; २,११-१२ अनुष्टुप्; ३-६ जगती; ७ ९ त्रिष्टुप्; १० यवमध्या महाबृहती ।

द्रापे अन्धसस्पते दरिद्रन्नीललोहित ।
एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो मो एषां किं चनाऽऽममत्[1] ॥
या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी ।
शिवा रुद्रस्य भेषजी तया नो मृड जीवसे[2] ॥
इमाꣳ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतिम् ।
यथा नः शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मि-(१)-न्ननातुरम्[3] ॥
मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते ।
यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ[4] ॥
मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् ।
मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो (२) रुद्र रीरिषः[5] ॥
मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते[6] ॥
आरात् ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु ।
रक्षा च नो अधि च देव ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः[7] ॥
स्तुहि (३) श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ।
मृडा जरित्रे रुद्र स्तवानो अन्यं ते अस्मन्नि वपन्तु सेनाः[8] ॥

---

(१०।१) ...रोऽस्मो च नः...। वा० य० १६,४७; अथर्व० ६,५७,३। (१०।३) इमा रुद्राय०...। ऋ० १,११४,१; वा० य० १६,४८। (१०।५-६) ऋ० १,११४,७-८; वा० य० १६,१५-१६; अथर्व० ११,२,२९।

*

परि णो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय ॥
मीढुष्टम शिवतम शिवो नः सुमना भव ।
परमे वृक्ष आयुधं निधाय कृत्तिं वसान आ चर पिनाकं (४) बिभ्रदा गहि[१०] ॥
विकिरिद विलोहित नमस्ते अस्तु भगवः । यास्ते सहस्रꣳ हेतयोऽन्यमस्मन्नि वपन्तु ताः ॥
सहस्राणि सहस्रधा बाहुवोस्तव हेतयः । तासामीशानो भगवः पराचीना मुखा कृधि[१२] ॥
(अस्मिन्,- स्तनुष्व, स्तुहि, पिनाक,- मेकान्नत्रिꣳशच्च २९) ॥१०॥

चितस्थग्नौ होममन्त्राः ॥ १-१० अनुष्टुप् ।
सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम् ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि[१] ॥
अस्मिन् महत्यर्णवेऽन्तरिक्षे भवा अधि[२] ॥
नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः[३] ॥
नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः[४] ॥
ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः[५] ॥
ये भूतानामधिपतयो विशिखासः कपर्दिनः[६] ॥
ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्[७] ॥
ये पथां पथिरक्षय ऐलबृदा यव्युधः[८] ॥
ये तीर्थानि (१) प्रचरन्ति सृकावन्तो निषङ्गिणः[९] ॥
य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे[१०] ॥
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि[११] ॥

नमो रुद्रेभ्यो ये पृथिव्यां[१२] येऽन्तरिक्षे[१३] ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च (२) नो द्वेष्टि तं वो जम्भे दधामि[१४] ॥ (तीर्थानि, यश्च, पञ्च च ६) ॥११॥

[नमस्ते २२२। नमो हिरण्यबाहवे ७९। नमः सहमानाय १०३। नम आव्याधिनीभ्यो १०२। नमो भवाय ७५। नमो ज्येष्ठाय ७५। नमो दुन्दुभ्याय ८०। नमः सोमाय ८०। नम इरिण्याय ८३। द्रापे २२९। सहस्राणि- १०६। (-कादश ॥११॥ १२३४)]

[ ॥ इति चतुर्थकाण्डे पञ्चमः प्रपाठकः ॥५॥ ]

---

(१०।१) ऋ० १,२३,१४; परि वो रुद्रस्य...। अथर्व० ७,९२,७ (च० पा०)। (११।१४) यं द्विष्मो...दध्मः। वा० स० १६,६४-६६; अथर्व० ३,२७,१-६ (तृ० च०)।

# परिषेचनसंस्काराभिधानम् ।

[ अथ षष्ठः प्रपाठकः ॥६॥ ] अग्नि ऋषिः ।

अग्निसंस्कारेषु परिषेचनादि ॥ १ अतिजगती; ३-४ उष्णिक्; ५,८-१०,२१ गायत्री; ६ वर्धमाना, शङ्कुमती वा गायत्री; द्विपदा त्रिष्टुप्; ११-१२ आस्तारपंक्तिः; १८,२०,२२ त्रिष्टुप्; १९ जगती ।

अश्मन्नूर्जं पर्वते शिश्रियाणां वाते पर्जन्ये वरुणस्य शुष्मे ।
अद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधि सम्भृतां तां न इषमूर्जं धत्त मरुतः संरराणाः ॥
अश्मंस्ते क्षुदमुं ते शुगृच्छतु यं द्विष्मः ॥[३]
समुद्रस्य त्वाऽवाकयाऽग्ने परि व्ययामसि । पावको अस्मभ्यं शिवो भव ॥
हिमस्य त्वा जरायुणाऽग्ने परि व्ययामसि । पावको अस्मभ्यं शिवो भव ॥
उप (१) ज्मन्नुप वेतसेऽवत्तरं नदीष्वा । अग्ने पित्तमपामसि[५] ॥
मण्डूकि ताभिरा गहि सेमं नो यज्ञम् । पावकवर्णं शिवं कृधि ॥
पावक आ चितयन्त्या कृपा । क्षामन् रुरुच उषसो न भानुना[७] ॥
तूर्वन् न यामन्नेतशस्य नू रण आ यो घृणे । न ततृषाणो अजरः[८] ॥
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् (२) वक्षि यक्षि च ॥
स नः पावक दीदिवोऽग्ने देवाँ इहाऽऽ वह । उप यज्ञं हविश्च नः ॥[१०]
अपामिदं न्ययनं समुद्रस्य निवेशनम् ।
अन्यं ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यं शिवो भव ॥[११]
नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे ।
अन्यं ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यं शिवो भव ॥[१२]
नृषदे वट्[१३]-(३)-डप्सुषदे वट्[१४] वनसदे वट्[१५] बर्हिषदे वट्[१६] सुवर्विदे वट्[१७] ॥
ये देवा देवानां यज्ञिया यज्ञियानां संवत्सरीणमुप भागमासते ।
अहुतादो हविषो यज्ञे अस्मिन्त्स्वयं जुहुध्वं मधुनो घृतस्य[१८] ॥
ये देवा देवेष्वधि देवत्वमायन् ये ब्रह्मणः पुरएतारो अस्य ।
येभ्यो नर्ते पवते धाम किं चन न ते दिवो न पृथिव्या अधि स्नुषु[१९] ॥

---

(१।१-६) वा० य० १७,१,४-६; मै० २,१०,१-४; काठ० १७,७१-७४ । (१।४) अथर्व० ६,१०६,३ (पूर्वार्धः)। (१।७-८) ऋ० ६,१५,५; वा० य० १७,१०; मै० २,१०,७; काठ० १७,७७ । (१।९-१०) ऋ० ५,२६,१; १,१२,१०; वा० य० १७,८-९; मै० २,१०,६; काठ० १७,७६; १९,३१ । (१।११-१९) ऋ० १०,१४२,७; वा० य० १७,७, ११-१४; अथर्व० ६,१०६,२; मै० २,१०,५,८-९,११-१२; काठ० १७,७५,७८-८१ ।

गच्छन्ति॑ त्रय॑स्त्रयस्त्रि॒ꣳशा अ॒वस्ता॑द्भवन्ति त्रय॑स्त्रयस्त्रि॒ꣳशाः प॒रस्ता॑त् त्रयस्त्रि॒ꣳशैरे॒वोभ॒यतो॑ऽव॒र्तिं पा॒प्मान॑मप॒हत्य॑ दै॒वीꣳ स॒ꣳसदं॑ मध्य॒तो (२) ग॑च्छन्ति पृ॒ष्ठानि॑ हि दै॒वी स॒ꣳस॑ज्जा॒मि वा ए॒तत् कु॑र्वन्ति॒ यत् त्रय॑स्त्रयस्त्रि॒ꣳशा अ॒न्वञ्चो॑ मध्ये॑ऽनि॒रुक्तो॑ भव॒ति तेना॑जा॒म्यू॑र्ध्वानि॑ पृ॒ष्ठानि॑ भव॒न्त्यू॒र्ध्वाश्छ॑न्दो॒मा उ॒भाभ्या॒ꣳ रू॒पाभ्या॒ꣳ सु॑व॒र्गं लो॒कं य॑न्त्य॒स॒त्रं वा ए॒तद्यद॑छन्दो॒मं यच्छ॑न्दो॒मा भव॑न्ति॒ तेन॑ स॒त्रं दे॒वता॑ ए॒व पृ॒ष्ठैरव॑ रुन्धते प॒शूञ्छ॑न्दो॒मैरोजो॒ वै वी॒र्यं॑ पृ॒ष्ठानि॑ प॒शव॑-(३)-श्छ॒न्दो॒मा ओज॑स्ये॒व वी॒र्ये॑ प॒शुषु॒ प्रति॑ तिष्ठन्ति॒ त्रय॑स्त्रयस्त्रि॒ꣳशा अ॒वस्ता॑द्भवन्ति॒ त्रय॑स्त्रयस्त्रि॒ꣳशाः प॒रस्ता॒न्मध्ये॑ पृ॒ष्ठान्यु॒रो वै त्र॑यस्त्रि॒ꣳशा आ॒त्मा पृ॒ष्ठान्या॒त्मन॑ ए॒व तद्यज॑माना॒ः शर्म॑ नह्यन्ते॒ऽनार्त्यै॑ बृहद्र॑थंत॒राभ्यां॑ यन्ती॒यं वाव र॑थंत॒रम॒सौ बृ॑हद्दा॒भ्यामे॒व य॑न्त्य॒थो अ॒नयो॑रे॒व प्रति॑ तिष्ठ॒न्त्ये॒ते वै य॒ज्ञस्या॑ञ्ज॒सा॒यनी॑ स्रु॒ती ताभ्या॑मे॒व (४) सु॑व॒र्गं लो॒कं य॑न्ति॒ परा॑ञ्चो॒ वा ए॒ते सु॑व॒र्गं लो॒कम॒भ्यारो॑हन्ति॒ ये परा॑चीनानि पृ॒ष्ठान्यु॑प॒यन्ति॑ प्र॒त्यङ् ष॑ड॒हो भ॑वति प्र॒त्यव॑रूढ्या॒ अथो॒ प्रति॑ष्ठित्या उ॒भयो॑र्लो॒कयो॑-ॠ॒द्ध्वोत् ति॑ष्ठन्ति॒ त्रि॒वृतो॑ऽधि॑ त्रि॒वृत॒मुप॑ यन्ति॒ स्तोमा॑ना॒ꣳ संप॑त्त्यै प्रभ॒वाय॒ ज्योति॑रग्निष्टो॒मो भ॑व॒त्य॒यं वाव स क्ष॒यो॑ऽस्मादे॒व तेन॑ क्ष॒यान्न य॑न्ति च॒तुर्वि॒ꣳशाति॒रात्रो॑ भ॑वति॒ च॒तुर्वि॑ꣳशतिरर्ध॒मा॒साः सं॑वत्स॒रः (५) सं॑वत्स॒रः सु॑व॒र्गो लो॒कः सं॑वत्स॒र ए॒व सु॑व॒र्गे लो॒के प्रति॑ तिष्ठ॒न्त्यथो॑ च॒तुर्वि॑ꣳशत्यक्षरा गाय॒त्री गा॑य॒त्री ब्र॑ह्मवर्च॒सं गा॑यत्रि॒यैव ब्र॑ह्मवर्च॒सम॑व रुन्धते॒ऽतिरा॒त्राव॒भितो॑ भवतो ब्रह्मवर्च॒सस्य॒ परि॑गृहीत्यै ॥ ( मनुष्यस्य, मध्यतः, पशव,- स्ताभ्यामेव, संवत्सर,- श्चतुर्विꣳशतिश्च ॥२४॥ )

॥२॥

त्रिंꣳवृद्रात्रः ॥

ऋक्षा वा इ॒यम॑लो॒मका॑ऽऽसी॒त् साऽका॑मय॒तौष॑धीभि॒र्वन॒स्पति॑भिः॒ प्र जा॑येये॒ति सैतास्त्रि॒ꣳशत॒ꣳ रात्री॑रपश्य॒त् ततो॒ वा इ॒यमोष॑धीभि॒र्वन॒स्पति॑भिः॒ प्राजा॑यत॒ ये प्र॒जाका॑माः प॒शुका॑माः॒ स्युस्त ए॒ता आसी॑रन् प्रै॒व जा॑यन्ते प्र॒जया॑ प॒शुभि॑रि॒यं वा अ॑क्षुध्य॒त् सैतां॑ वि॒राज॑मपश्य॒त् ता॒मा॒त्मन् धि॒त्वा ऽन्ना॒द्यमवा॑रु॒न्धौष॑धी-(१)-र्वन॒स्पती॑न् प्र॒जां प॒शून् तेना॑वर्धत॒ सा जे॒मान॑ं महि॒मान॑मगच्छ॒द्य ए॒वं वि॒द्वाꣳस॑ ए॒ता आस॑ते वि॒राज॑मे॒वाऽऽत्मन् धि॒त्वाऽन्ना॒द्य॑मव॑ रुन्धते॒ वर्ध॑न्ते प्र॒जया॑ प॒शुभि॑र्जे॒मान॑ं महि॒मान॑ं गच्छन्ति॒ ज्योति॑रतिरा॒त्रो भ॑वति सुव॒र्गस्य॑ लो॒कस्या॒नुख्या॑त्यै पृ॒ष्ठ्यः॑ षड॒हो भ॑वति॒ षड् वा ऋ॒तवः॒ षड् पृ॒ष्ठानि॑ पृ॒ष्ठैरे॒वर्तून॒न्वारो॑हन्त्यृ॒तुभिः॑ संवत्स॒रं ते सं॑वत्स॒र ए॒व (२) प्रति॑ तिष्ठन्ति॒ त्रयस्त्रि॒ꣳशात् त्र॑यस्त्रि॒ꣳशमु॒प य॑न्ति य॒ज्ञस्य॒ संत॑त्या॒ अथो॑ प्र॒जाप॑तिर्वै त्र॑यस्त्रि॒ꣳशः प्र॒जाप॑तिमे॒वाऽऽ र॑भन्ते प्रति॑ष्ठित्यै त्रि॒ण॒वो भ॑वति॒ विजि॑त्या॒ एक॒वि॒ꣳशो भ॑वति॒ प्रति॑ष्ठित्या॒ अथो॒ रुच॑मे॒वाऽऽ-त्मन् द॑धते त्रि॒वृद॑ग्नि॒ष्टुद्भ॑वति पा॒प्मान॑मे॒व तेन॒ निर्द॑हन्ते॒ऽथो॒ तेजो॒ वै त्रि॒वृत् तेज॑ ए॒वाऽऽत्मन् द॑धते पञ्चद॒श इ॑न्द्रस्तो॒मो भ॑वतीन्द्रि॒यमे॒वाव॑ (३) रुन्धते सप्तद॒शो भ॑वत्य॒न्नाद्य॒स्याव॑रुद्ध्या

अथो प्रैव तेन जायन्ते एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन् दधते[11] चतुर्विꣳशो भवति चतुर्विꣳशतिरर्धमासाः संवत्सरः संवत्सरः सुवर्गो लोकः संवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो एष वै विषूवान् विषूवन्तो भवन्ति य एवं विद्वाꣳस एता आसते[12] चतुर्विꣳशात् पृष्ठान्युप यन्ति संवत्सर एव प्रतिष्ठाय (४) देवता अभ्यारोहन्ति[13] त्रयस्त्रिꣳशात् त्रयस्त्रिꣳशमुप यन्ति त्रयस्त्रिꣳशद्वै देवता देवतास्वेव प्रति तिष्ठन्ति[14] त्रिणवो भवतीमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रति तिष्ठन्ति[15] द्वावेकविꣳशौ भवतः प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन् दधते[16] बहवः षोड-शिनो भवन्ति तस्माद्बहवः प्रजासु वृषाणो[17] यदेते स्तोमा व्यतिषक्ता भवन्ति तस्मादियमोषधी-भिर्वनस्पतिभिर्व्यतिषक्ता[18] (५) व्यतिषज्यन्ते प्रजया पशुभिर्य एवं विद्वाꣳस एता आसते[19] ऽक्लृप्ता वा एते सुवर्गं लोकं यन्त्युच्चावचान् हि स्तोमानुपयन्ति यदेत ऊर्ध्वाः क्लृप्ताः स्तोमा भवन्ति क्लृप्ता एव सुवर्गं लोकं यन्त्युभयोरेभ्यो लोकयोः कल्पते[20] त्रिꣳशदेतास्त्रिꣳशदक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धते[21] ऽतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै[22] ॥ ( ओषधीः, संवत्सर एवा,– ऽ, प्रतिष्ठाय, व्यतिषक्ता,– क्लृप्तास्त्रयोदश च ४९ ) ॥३॥

द्वात्रिंशद्रात्रः ॥

प्रजापतिः सुवर्गं लोकमैत् तं देवा येनयेन छन्दसाऽनु प्रायुञ्जत तेन नाऽऽप्नुवन् त एता द्वात्रिꣳ-शतꣳ रात्रीरपश्यन् द्वात्रिꣳशदक्षराऽनुष्टुगानुष्टुभः प्रजापतिः स्वेनैव छन्दसा प्रजापतिमाप्त्वाऽभ्या-रुह्य सुवर्गं लोकमायन् य एवं विद्वाꣳस एता आसते द्वात्रिꣳशदेता द्वात्रिꣳशदक्षराऽनुष्टुगानुष्टुभः प्रजापतिः स्वेनैव छन्दसा प्रजापतिमाप्त्वा श्रियं गच्छन्ति (१) श्रीर्हि मनुष्यस्य सुवर्गो लोको[1] द्वात्रिꣳशदेता द्वात्रिꣳशदक्षराऽनुष्टुग्वागनुष्टुप् सर्वामेव वाचमाप्नुवन्ति सर्वे वाचो वदितारो भवन्ति सर्वे हि श्रियं गच्छन्ति[2] ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायु-रिमानेव लोकानभ्यारोहन्त्यभिपूर्वं त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गं लोकमभ्यारोहन्ति[3] बृहद्रथं-तराभ्यां यन्ती-(२)-यं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञ-स्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति[4] पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचस्त्र्यहानुपयन्ति[5] प्रत्यङ् त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत् तिष्ठन्ति[6] द्वात्रिꣳशदेतास्तासां यास्त्रिꣳशत् त्रिꣳशदक्षरा (३) विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धते ये द्वे अहोरात्रे एव ते उभाभ्याꣳ रूपाभ्याꣳ सुवर्गं लोकं यन्त्य[7]तिरात्रावभितो भवतः परिगृहीत्यै[8] ॥ ( गच्छन्ति, यन्ति, त्रिꣳशदक्षरा, द्वाविꣳशतिश्च २२ ) ॥४॥

त्रयस्त्रिंशद्रात्रः ॥

द्वे वाव देवसत्रे द्वादशाहश्चैव त्रयस्त्रिꣳशदहश्च य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते साक्षादेव

देवता अभ्यारोहन्ति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति यद्यवविध्यति पापीयान् भवति यदि नाववविध्यति सदृङ् य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते वि पाप्मना भ्रातृव्येणाऽऽवर्तन्ते[1] ऽहर्भाजो वा एता देवा अग्र आऽहर-(१)-न्नहरेकोऽभजताहरेकस्ताभिर्वै ते प्रबाहुगार्ध्नुवन् य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते सर्व एव प्रबाहुगृध्नुवन्ति सर्वे ग्रामणीयं प्राप्नुवन्ति[2] पञ्चाहा भवन्ति पञ्च वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्त्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धते[3] त्रीण्याश्विनानि भवन्ति त्रय इमे लोका एष्वे-(२)-व लोकेषु प्रति तिष्ठन्त्यथो त्रीणि वै यज्ञस्येन्द्रियाणि तान्येवाव रुन्धते[4] विश्वजिद्भवत्यन्नाद्यस्यावरुद्ध्यै[5] सर्वपृष्ठो भवति सर्वस्याभिजित्यै[6] वाग्वै द्वादशाहो यत् पुरस्ताद् द्वादशाहमुपेयुरनाप्तां वाचमुपेयुरुपदासुकैषां वाक् स्यादुपरिष्टाद् द्वादशाहमुप यन्त्याप्तामेव वाचमुप यन्ति तस्मादुपरिष्टाद्वाचा वदामो[7] ऽवान्तरं (३) वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्दशरात्रो भवति प्रजा एव तद्यजमानाः सृजन्त[8] एताꣳ ह वा उदङ्कः शौल्बायनः सत्रस्यर्धिमुवाच यद्दशरात्रो यद्दशरात्रो भवति सत्रस्यर्ध्या अथो यदेव पूर्वेष्वहःसु विलोम क्रियते तस्यैवैषा शान्ति[9]—द्व्यनीका वा एता रात्रयो यजमाना विश्वजित् सहातिरात्रेण पूर्वाः षोडश सहा-(४)-तिरात्रेणोत्तराः षोडश य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासत ऐषां द्व्यनीका प्रजा जायते[10] ऽतिरात्रावभितो भवतः परिगृहीत्यै[11] ॥ (अहर्,-ष्वे,- वान्तरꣳ, षोडश सह, सप्तदश च १७) ॥५॥

षट्त्रिंशद्रात्रः ॥

आदित्या अकामयन्त सुवर्गं लोकमियामेति ते सुवर्गं लोकं न प्राजानन्न सुवर्गं लोकमायन् त एतꣳ षट्त्रिꣳशद्रात्रमपश्यन् तमाऽहरन् तेनायजन्त ततो वै ते सुवर्गं लोकं प्राजानन्त्सुवर्गं लोकमायन् य एवं विद्वाꣳसः षट्त्रिꣳशद्रात्रमासते सुवर्गमेव लोकं प्र जानन्ति सुवर्गं लोकं यन्ति[1] ज्योतिरतिरात्रो (१) भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानुख्यात्यै[2] षडहा भवन्ति षड् वा ऋतव ऋतुष्वेव प्रति तिष्ठन्ति[3] चत्वारो भवन्ति चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठन्त्य[4]—सत्रं वा एतद्यदच्छन्दोमं यच्छन्दोमा भवन्ति तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव (२) वीर्ये पशुषु प्रति तिष्ठन्ति[5] षट्त्रिꣳशद्रात्रो भवति षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैव पशूनव रुन्धते बृहती छन्दसाꣳ स्वाराज्यमाश्नुताश्नुवते स्वाराज्यं य एवं विद्वाꣳसः षट्त्रिꣳशद्रात्रमासते सुवर्गमेव लोकं यन्त्य[6]—तिरात्रावभितो भवतः सुवर्गस्य लोकस्य परिगृहीत्यै[7] ॥ (अतिरात्र, ओजस्येव, षट्त्रिꣳशच्च ३६) ॥६॥

एकोनपञ्चाशद्रात्रः ॥

वसिष्ठो हतपुत्रोऽकामयत विन्देय प्रजामभि सौदासान् भवेयमिति स एतमेकस्मान्नपञ्चाशमप- श्यत् तमाऽहरत् तेनायजत ततो वै सोऽविन्दत प्रजामभि सौदासानभवद्य एवं विद्वा॑ꣳस एकस्मा- न्नपञ्चाशमासते विन्दन्ते प्रजामभि भ्रातृव्यान् भवन्ति[1] त्रयस्त्रिवृतोऽग्निष्टोमा भवन्ति वज्रस्यैव मुखꣳ सꣳ श्यन्ति[2] दश पञ्चदशा भवन्ति पञ्चदशो वज्रो (१) वज्रमेव भ्रातृव्येभ्यः प्र हरन्ति[3] षोडशिमद्दशममहर्भवति वज्र एव वीर्यं दधति[4] द्वादश सप्तदशा भवन्त्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तैर्जायन्ते[5] पृष्ठ्यः षडहो भवति षड्वा ऋतवः षट् पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संव- त्सरं ते संवत्सर एव प्रति तिष्ठन्ति[6] द्वादशैकविꣳशा भवन्ति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन् (२) दधते[7] बहवः षोडशिनो भवन्ति विजित्यै[8] षडाश्विनानि भवन्ति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठन्त्यू[9]नातिरिक्ता वा एता रात्रय ऊनास्तद्यदेकस्यै न पञ्चाशदतिरिक्तास्तद्यद्भूयसीरष्टाच- त्वारिꣳशत ऊनाच्च खलु वा अतिरिक्ताच्च प्रजापतिः प्राजायत[10] ये प्रजाकामाः पशुकामाः स्युस्त एता आसीरन् प्रैव जायन्ते प्रजया (३) पशुभि[11]र्वैराजो वा एष यज्ञो यदेकस्मान्नपञ्चाशो य एवं विद्वा॑ꣳस एकस्मान्नपञ्चाशमासते विराजमेव गच्छन्त्यन्नादा भवन्त्य[12]तिरात्रावभितो भवतोऽन्नाद्य- स्य परिगृहीत्यै[13] ॥ ( वज्रं, आत्मन्, प्रजया, द्वाविꣳशतिश्च २२ ) ॥७॥

संवत्सरसत्त्रदीक्षाकालः ॥

संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नी यदेकाष्टकैतस्यां वा एष एताꣳ रात्रिं वसति साक्षादेव संवत्सरमारभ्य दीक्षन्त[1] आर्तं वा एते संवत्सरस्याभि दीक्षन्ते य एकाष्टकायां दीक्षन्तेऽन्तनामानावृतू भवतो व्यस्तं वा एते संवत्सरस्याभि दीक्षन्ते य एकाष्टकायां दीक्षन्तेऽन्तनामानावृतू भवतः फल्गुनीपूर्णमासे दीक्षेरन् मुखं वा एतत् (१) संवत्सरस्य यत् फल्गुनी- पूर्णमासो मुखत एव संवत्सरमारभ्य दीक्षन्ते[2] तस्यैकैव निर्या यत् साम्मेघ्ये विषूवान्त्संपद्यते चित्रा- पूर्णमासे दीक्षेरन् मुखं वा एतत् संवत्सरस्य यच्चित्रापूर्णमासो मुखत एव संवत्सरमारभ्य दीक्षन्ते तस्य न का चन निर्या भवति[3] चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन् तेषामेकाष्टकायां क्रयः सं पद्यते तेनैकाष्टकां न छम्बट् कुर्वन्ति[4] तेषां (२) पूर्वपक्षे सुत्या सं पद्यते पूर्वपक्षं मासा अभि सं पद्यन्ते ते पूर्वपक्ष उत् तिष्ठन्ति तानुत्तिष्ठत ओषधयो वनस्पतयोऽनूत् तिष्ठन्ति तान् कल्याणी कीर्तिरनूत् तिष्ठत्यरात्सुरिमे यजमाना इति तदनु सर्वे राध्नुवन्ति[5] ॥ ( एतत्, छम्बट् कुर्वन्ति तेषां, चतु- स्त्रिꣳशच्च ३४ ) ॥८॥

दीक्षा उपसदश्च ॥

सुवर्गं वा एते लोकं यन्ति ये सत्रमुपयन्त्यभीन्धत एव दीक्षाभिरात्मानꣳ श्रपयन्त उपसद्भि[1]- र्द्वाभ्यां लोमाव द्यन्ति द्वाभ्यां त्वचं द्वाभ्यामसृद् द्वाभ्यां माꣳसं द्वाभ्यामस्थि द्वाभ्यां मज्जानं-

मात्मदक्षिणं वै सत्रमात्मनमेव दाक्षिणां नीत्वा सुवर्गं लोकं यन्ति[2] शिखामनु प्र वपन्त ऋद्ध्या अथो रघीयाᳪसः सुवर्गं लोकमयामेति[3] ॥ (सुवर्गं पञ्चाशत् ५०) ॥९॥

प्रायणीयमहः ॥

ब्रह्मवादिनो वदन्त्यतिरात्रः परमो यज्ञक्रतूनां कस्मात् तं प्रथममुप यन्तीत्येतद्वा अग्निष्टोमं प्रथममुप यन्त्यथोक्थ्यमथ षोडशिनमथातिरात्रमनुपूर्वमेवैतद्यज्ञक्रतूनुपेत्य तानालभ्य परिगृह्य सोममेवैतत् पिबन्त आसते ज्योतिष्टोमं प्रथममुप यन्ति ज्योतिष्टोमो वै स्तोमानां मुखं मुखत एव स्तोमान् प्र युञ्जते[1] ते (१) सᳪस्तुता विराजमभि सं पद्यन्ते द्वे चर्चावति रिच्येते एकया गौरतिरिक्त एकयाऽऽयुरूनः सुवर्गो वै लोको ज्योतिरूर्ग्विराट्सुवर्गमेव तेन लोकं यन्ति[2] रथंतरं दिवा भवति रथंतरं नक्तमित्याहुर्ब्रह्मवादिनः केन तदजामीति सौभरं तृतीयसवने ब्रह्मसामं बृहत् तन्मध्यतो दधति विधृत्यै तेनाजामि[3] ॥ ( त, एकान्नपञ्चाशच्च ४९ ) ॥१०॥

संवत्सरगतेषु सर्वमासेष्वहानि ॥

ज्योतिष्टोमं प्रथममुप यन्त्यस्मिन्नेव तेन लोके प्रति तिष्ठन्ति गोष्टोमं द्वितीयमुप यन्त्यन्तरिक्ष एव तेन प्रति तिष्ठन्त्यायुष्टोमं तृतीयमुप यन्त्यमुष्मिन्नेव तेन लोके प्रति तिष्ठन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुर्यदेतान्त्स्तोमानुपयन्त्येष्वेव तल्लोकेषु सत्रिणः प्रतितिष्ठन्तो यन्ति[1] ते सᳪस्तुता विराज-(१)-मभि सं पद्यन्ते द्वे चर्चावति रिच्येते एकया गौरतिरिक्त एकयाऽऽयुरूनः सुवर्गो वै लोको ज्योतिरूर्ग्विराडूर्जमेवाव रुन्धते ते न क्षुधाऽऽर्तिमार्च्छन्त्यक्षोधुका भवन्ति क्षुत्संबाधा इव हि सत्रिणो[2] ऽग्निष्टोमावभितः प्रधी तावुक्थ्या मध्ये नभ्यं तत् तदेतत् परियद्देवचक्रं यदेतेन (२) षडहेन यन्ति देवचक्रमेव समारोहन्त्यरिष्ट्यै ते स्वस्ति समश्नुवते[3] षडहेन यन्ति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठन्त्यु[4]भयतो ज्योतिषा यन्त्युभयत एव सुवर्गे लोके प्रतितिष्ठन्तो यन्ति[5] द्वौ षडहौ भवतस्तानि द्वादशाहानि सं पद्यन्ते द्वादशो वै पुरुषो द्वे सक्थ्यौ द्वौ बाहू आत्मा च शिरश्च चत्वार्यङ्गानि स्तनौ द्वादशौ (३) तत् पुरुषमनु पर्यावर्तन्ते[6] त्रयः षडहा भवन्ति तान्यष्टादशाहानि सं पद्यन्ते नवान्यानि नवान्यानि नव वै पुरुषे प्राणास्तत् प्राणाननु पर्यावर्तन्ते[7] चत्वारः षडहा भवन्ति तानि चतुर्विᳪशतिरहानि सं पद्यन्ते चतुर्विᳪशतिरर्धमासाः संवत्सरस्तत् संवत्सरमनु पर्यावर्तन्ते[8] ऽप्रतिष्ठितः संवत्सर इति खलु वा आहुर्वर्षीयान् प्रतिष्ठाया इत्येतावद्वै (४) संवत्सरस्य ब्राह्मणं यावन्मासो मासिमास्येव प्रतितिष्ठन्तो यन्ति[9] ॥ (विराज,- मेतेन, द्वादशा,- वेतावद्वा, अष्टौ च ८) ॥११॥

अश्वमेधाङ्गापाङ्गहोममन्त्राः, परियानमन्त्राश्च ॥

मेषस्त्वा-पचतैरवतु लोहितग्रीवश्छागैः[2] शल्मलिर्वृद्ध्या[3] पर्णो ब्रह्मणा[4] प्लक्षो मेधेन[5] न्य-

(१२) मै० ३,१२,२१; काठ० [अश्व०] ४,१ ।

ग्रोधश्चमसै[६]रुदुम्बर ऊर्जा[७] गायत्री छन्दोभि[८]स्त्रिवृत् स्तोमै[९]रवन्तीः स्थावन्तीस्त्वाऽवन्तु प्रियं त्वा प्रियाणां वर्षिष्ठमाप्यानां निधीनां त्वा निधिपतिꣳ हवामहे वसो मम[१०] ॥ ( मेषः षट्त्रिꣳशत् ३६ ) ॥१२॥

(१३-१४) अपां होममन्त्राः ॥

कूप्याभ्यः स्वाहा[१] कूल्याभ्यः स्वाहा[२] विकर्याभ्यः स्वाहा[३]ऽवट्याभ्यः स्वाहा[४] खन्याभ्यः स्वाहा[५] ह्रद्याभ्यः स्वाहा[६] सूद्याभ्यः स्वाहा[७] सरस्याभ्यः स्वाहा[८] वैशन्तीभ्यः स्वाहा[९] पल्वल्याभ्यः स्वाहा[१०] वर्ष्याभ्यः स्वाहा[११]ऽवर्ष्याभ्यः स्वाहा[१२] ह्रादुनीभ्यः स्वाहा[१३] पृष्वाभ्यः स्वाहा[१४] स्यन्दमानाभ्यः स्वाहा[१५] स्थावराभ्यः स्वाहा[१६] नादेयीभ्यः स्वाहा[१७] सैन्धवीभ्यः स्वाहा[१८] समुद्रियाभ्यः स्वाहा[१९] सर्वाभ्यः स्वाहा[२०] ॥ ( कूप्याभ्यश्चत्वारिꣳशत् ४० ) ॥१३॥

अद्भ्यः स्वाहा[१] वहन्तीभ्यः स्वाहा[२] परिवहन्तीभ्यः स्वाहा[३] समन्तं वहन्तीभ्यः स्वाहा[४] शीघ्रं वहन्तीभ्यः स्वाहा[५] शीभं वहन्तीभ्यः स्वाहो[६]ग्रं वहन्तीभ्यः स्वाहा[७] भीमं वहन्तीभ्यः स्वाहा[८]ऽम्भोभ्यः स्वाहा[९] नभोभ्यः स्वाहा[१०] महोभ्यः स्वाहा[११] सर्वस्मै स्वाहा[१२] ॥ ( अद्भ्य एकान्नत्रिꣳशत् २९ ) ॥१४॥

शुनः प्रहारः ॥ १ द्विपदा गायत्री; २ एकपदा गायत्री; ३ पङ्क्तिः; ४ त्रिष्टुप् ।

यो अर्वन्तं जिघाꣳसति तमभ्यमीति वरुणः[१] ॥
परो मर्तः परः श्वा[२] ॥
अहं च त्वं च वृत्रहन्त्सं बभूव सनिभ्य आ ।
अरातीवा चिदद्रिवोऽनु नौ शूर मꣳसतै भद्रा इन्द्रस्य रातयः[३] ॥
अभि क्रत्वेन्द्र भूरध ज्मन्न ते विव्यङ्महिमानꣳ रजाꣳसि ।
स्वेना हि वृत्रꣳ शवसा जघन्थ न शत्रुरन्तं विविद-(१)-द्युधा ते[४]॥ (त्रिविद्, द्वे च २)॥१५॥

अन्याख्यहोमः ॥

नमो राज्ञे[१] नमो वरुणाय[२] नमोऽश्वाय[३] नमः प्रजापतये[४] नमोऽधिपतये[५]ऽधिपतिरस्याधिपतिं मा कुर्वधिपतिरहं प्रजानां भूयासं मां धेहि मयि धेह्यु[६]पाकृताय स्वाहा[७]ऽऽलब्धाय स्वाहा[८] हुताय स्वाहा[९] ॥ ( नम एकान्नत्रिꣳशत् २९ ) ॥१६॥

---

(१२।१०) प्रियाणां त्वा प्रियपतिꣳ हवामहे । वा० य० २३,१९ । (१३) काठ० [अश्व०] ४,२ ।
(१४) वा० य० २२,२५,२९; काठ० [अश्व०] ४,३ । (१५।१--२) वा० य० २२,५, मै० ३.१२,३; काठ० [अश्व०] ४,४ । (१५।३) ऋ० ८,६२,११; काठ० [अश्व०] ४,५ । (१५।४) ऋ० ७,२१,६; काठ० [अश्व०] ४,६ ।
(१६) काठ० [अश्व०] ४,७ ।

गव्याकयाहोमः ॥ १-४ त्रिष्टुप् ।

मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम् ।
पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृड ॥
याः सरूपा विरूपा एकरूपा यासामग्निरिष्टचा नामानि वेद ।
या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ ॥
या देवेषु तनुवमैरयन्त यासाꣳ सोमो विश्वा रूपाणि वेद ।
ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्र (१) गोष्ठे रिरीहि ॥
प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैः पितृभिः संविदानः ।
शिवाः सतीरुप नो गोष्ठमाऽकस्तासां वयं प्रजया सꣳ सदेम ॥
इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहा महीमू षु सुत्रामाणम् ॥ ( इन्द्र,- द्वात्रिꣳशच्च ३८ ) ॥१७॥

ब्रह्मोद्यम् ॥ १-४ अनुष्टुप्, ५-६ त्रिष्टुप् ।

किꣳ स्विदासीत् पूर्वचित्तिः किꣳ स्विदासीद्बृहद्वयः ।
किꣳ स्विदासीत् पिशङ्गिला किꣳ स्विदासीत् पिलिप्पिला ॥
द्यौरासीत् पूर्वचित्तिरश्व आसीद्बृहद्वयः । रात्रिरासीत् पिशङ्गिलाऽविरासीत् पिलिप्पिला ॥
कः स्विदेकाकी चरति क उ स्विज्जायते पुनः ।
किꣳ स्विद्धिमस्य भेषजं किꣳ स्विदावपनं महत् ॥
सूर्य एकाकी चरति (१) चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥
पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम् ।
पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥
वेदिमाहुः परमन्तं पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम् ।
सोममाहुर्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः परमं व्योम ॥ ( सूर्य एकाकी चरति, षट्चत्वारिꣳशच्च ४६ ) ॥१८॥

---

( १७।१-४ ) ऋ० १०,१६९, १-४; काठ [अश्व०] ४,८-११। ( १७।५-८ ) वा० य० २१,१९; काठ० [अश्व०] ४,११।
(१७।९) ऋ० १०,६३ ,१०; वा० य० २१,५-६; अथर्व० ७,६,२-३। (१८।१-२) वा० य० २३,११-१२,५३-५४; काठ० [ अश्व० ] ४,१५-१६। ( १८।३-४ ) वा० य० २३,९-१०,४५-४६; काठ० [ अश्व० ] ४,१३-१४। (१८।५-६) ऋ० १,१६४,३४-३५; वा० य० २३,६१-६२; अथर्व० ९,१०,१३-१४ ।

मरणोत्तरकालीनोऽश्वोपचारः॥ गायत्री, २,८,१०,१२,१४-१५ अनुष्टुप्, ३,६ द्विपदा गायत्री ८ एकपदा त्रिष्टुप्,५ पङ्क्तिः।

अम्बे अम्बाल्यम्बिके न मा नयति कश्चन । ससस्त्यश्वकः[1] ॥
सुभगे काम्पीलवासिनि सुवर्गे लोके सं प्रोर्ण्वाथाम् ।
आऽहमजानि गर्भधमा त्वमजासि गर्भधम्[2] ॥
तौ सह चतुरः पदः सं प्र सारयावहै[3] ॥
वृषा वाꣳ रेतोधा रेतो दधातूत् सक्थ्योर्गृदं धेह्यञ्जिमुदञ्जिमन्वज ।
यः स्त्रीणां जीवभोजनो य आसां (१) बिलधावनः । प्रियः स्त्रीणामपीच्यः[5] ॥
य आसां कृष्णे लक्ष्मणि सर्दिगृदिं परावधीत्[6] ॥
अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वकः[7] ॥
ऊर्ध्वामेनामुच्छ्रयताद्वेणुभारं गिराविव । अथास्या मध्यमेधताꣳ शीते वाते पुनन्निव ॥
अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वकः[9] ॥
यद्धरिणी यवमत्ति न (२) पुष्टं पशु मन्यते । शूद्रा यदर्यजारा न पोषाय धनायति[10] ॥
अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वकः[11] ॥
इयं यका शकुन्तिका ऽऽहलमिति सर्पति ।
आहतं गभे पसो नि जल्गुलीति धाणिका[12] ॥
अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वकः[13] ॥
माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः (३) ।
प्र सुलामीति ते पिता गभे मुष्टिमतꣳसयत्[14] ॥
दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूꣳषि तारिषत्[15] ॥
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे[16] ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः[17] ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ (४) । आपो जनयथा च नः[18] ॥

( आसां,- मत्ति न, रोहतो, जिन्वथ, चत्वारि च ४ ) ॥१९॥

---

( १९।१,७,९,११,१३ ) वा० य० २३,१८। काठ० [ अश्व० ] ४,१९,२२,२४,२६,२८। ( १९।२-५,६,८,१०,१२,१४-१५ ) वा० य० २३,१८-२२,२४-२७,३०-३१। काठ० [ अश्व० ] ४,२०-२१,२३,२५,२७,२९-३०; दधिक्राव्णो अकारिषं० । ऋ० ४,३९,७; वा० य० २३,३२; अथर्व० २०,१३७,३; सा० ३५८। ( १९,१६-१८ ) ऋ० १०,९,१-३, वा० य० ११,५०-५२; ३६,१४-१६; सा० १८३७-३९; अथर्व० १,५,१-३ ।

मरणप्राक्कालीनोऽश्वोपचारः ॥ ७ बृहती; ८ उपरिष्टाद्बृहती, अनुष्टुप् वा; ९-११ गायत्री ।

भूर्भुवः सुवर्वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसा रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभेन छन्दसाऽऽदित्यास्त्वाऽञ्जन्तु जागतेन छन्दसा ॥

यद्वातो अपो अगमदिन्द्रस्य तनुवं प्रियाम् । एतꣳ स्तोतरेतेन पथा पुनरश्वमा वर्तयासि नः ॥

लाजी३ञ्छाची३न् यशो ममा३म् ।

यव्यायै गव्याया एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापते ॥

युञ्जन्ति ब्रध्न-(१)-मरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥

युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ ( ब्रध्नं, पञ्चविꣳशतिश्च २५ )

॥२०॥

सन्ततिहोममन्त्राः ॥

प्राणाय स्वाहा व्यानाय स्वाहाऽपानाय स्वाहा स्नावभ्यः स्वाहा संतानेभ्यः स्वाहा परिसंतानेभ्यः स्वाहा पर्वभ्यः स्वाहा संधानेभ्यः स्वाहा शरीरेभ्यः स्वाहा यज्ञाय स्वाहा दक्षिणाभ्यः स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा ॥ ( प्राणायाष्टाविꣳशतिः २८ ) ॥२१॥

प्रमुक्तिहोमः ॥

सिताय स्वाहाऽसिताय स्वाहाऽभिहिताय स्वाहाऽनभिहिताय स्वाहा युक्ताय स्वाहाऽयुक्ताय स्वाहा सुयुक्ताय स्वाहोद्युक्ताय स्वाहा विमुक्ताय स्वाहा प्रमुक्ताय स्वाहा वञ्चते स्वाहा परिवञ्चते स्वाहा संवञ्चते स्वाहाऽनुवञ्चते स्वाहोद्वञ्चते स्वाहा यते स्वाहा धावते स्वाहा तिष्ठते स्वाहा सर्वस्मै स्वाहा ॥ ( सितायाष्टात्रिꣳशत् ३८ ) ॥२२॥

[ बृहस्पति-१४५। -र्थ- २७४। -क्षाः २९९। प्रजापति- १७२। -र्द्वे २१७। आदित्या १३६। वसिष्ठः १७२। संवत्सराय १३४। सुवर्गं ५०। ब्रह्मवादिनो ९९। ज्योतिष्टोमं २०८। मेषः ३६। कूष्माण्ड्यो ४०। ऽग्नयो २९। यो ५२। नमो २९। मयोभूः ८८। किम- ९६। -न्वे २०४। भूः ७५। प्राणाय २८। सिताय ३८। ( द्वाविꣳशतिः ॥२२॥ २६२१ )]

[॥ इति सप्तमकाण्डे चतुर्थः प्रपाठकः ॥४॥ ]

---

( २०११—८ ) वा० य० २३,८; काठ० [ ०श्व० ] ४,३१,३३ । ( २०१९—११ ) ऋ० १,६,१—३; वा० य० २३,५—६, २९,३७; सा० १४६८—७०, अथर्व० २०,२६,४-६; ४७,१०—१२; ६९,९—११; काठ० [ अश्व ] ४, ३४—३६ । ( २१ ) वा० य० २२,२३,३४; २३,१८; ३९,३,१०; काठ० [ अश्व० ] ४,३७ । ( २२ ) काठ० [ अश्व० ] ५,१ ।

## सत्रविशेषाभिधानम् ।

[ अथ पञ्चमः प्रपाठकः ॥५॥ ] विश्वे देवा ऋषयः ।

गवामयनाख्यं संवत्सरसत्रम् ॥

गावो वा एतत् सत्रमासताशृङ्गाः सतीः शृङ्गाणि नो जायन्ता इति कामेन तासां दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त ता उदतिष्ठन्नरात्स्मेत्यथ यासां नाजायन्त ताः संवत्सरमाप्त्वोदतिष्ठन्नरात्स्मेति यासां चाजायन्त यासां च न ता उभयीरुदतिष्ठन्नरात्स्मेति गोसत्रं वै (१) संवत्सरो य एवं विद्वाꣳसः संवत्सरमुपयन्त्यृध्नुवन्त्येव तस्मात् तूपरा वार्षिकौ मासौ पर्त्वी चरति सत्राभिजितꣳ ह्यस्यै[2] तस्मात् संवत्सरसदो यत् किं च गृहे क्रियते तदाप्तमवरुद्धमभिजितं क्रियते[3] समुद्रं वा एते प्र प्लवन्ते ये संवत्सरमुपयन्ति यो वै समुद्रस्य पारं न पश्यति न वै स तत उदेति संवत्सरो (२) वै समुद्रस्तस्यैतत् पारं यदतिरात्रौ य एवं विद्वाꣳसः संवत्सरमुपयन्त्यनार्ता एवोदृचं गच्छन्ती[4]यं वै पूर्वोऽतिरात्रोऽसावुत्तरो मनः पूर्वो वागुत्तरः प्राणः पूर्वोऽपान उत्तरः प्ररोधनं पूर्व उदयनमुत्तरो[5] ज्योतिष्टोमो वैश्वानरोऽतिरात्रो भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानुख्यात्यै[6] चतुर्विꣳशः प्रायणीयो भवति चतुर्विꣳशतिरर्धमासाः (३) संवत्सरः प्रयन्त एव संवत्सरे प्रति तिष्ठन्ति तस्य त्रीणि च शतानि षष्टिश्च स्तोत्रीयास्तावतीः संवत्सरस्य रात्रय उभे एव संवत्सरस्य रूपे आप्नुवन्ति[7] ते सꣳस्थित्या अरिष्ट्या उत्तरैरहोभिश्चरन्ति[8] षडहा भवन्ति षड् वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्ति[9] गौश्चाऽऽयुश्च मध्यतः स्तोमौ भवतः संवत्सरस्यैव तन्मिथुनं मध्यतो (४) दधति प्रजननाय[10] ज्योतिरभितो भवति विमोचनमेव तच्छन्दाꣳस्येव तद्विमोकं यन्त्यथो उभयतोज्योतिषैव षडहेन सुवर्गं लोकं यन्ति[11] ब्रह्मवादिनो वदन्त्यासते केन यन्तीति देवयानेन पथेति ब्रूयाच्छन्दाꣳसि वै देवयानः पन्था गायत्री त्रिष्टुब्जगती ज्योतिर्वै गायत्री गौस्त्रिष्टुगायुर्जगती यदेते स्तोमा भवन्ति देवयानेनैव (५) तत् पथा यन्ति[12] समानꣳ साम भवति देवलोको वै साम देवलोकादेव न यन्त्य[13]न्यान्या ऋचो भवन्ति मनुष्यलोको वा ऋचो मनुष्यलोकादेवान्यमन्यं देवलोकमभ्यारोहन्तो यन्त्य[14]भिवर्तो ब्रह्मसाम भवति सुवर्गस्य लोकस्याभिवृत्त्यै[15] अभिजिद्भवति सुवर्गस्य लोकस्याभिजित्यै[16] विश्वजिद्भवति विश्वस्य जित्यै[17] मासिमासि पृष्ठान्युप यन्ति मासिमास्यतिग्राह्या गृह्यन्ते मासिमास्येव वीर्यं (६) दधति मासां प्रतिष्ठित्यै[18] उपरिष्टान्मासां पृष्ठान्युप यन्ति तस्मादुपरिष्टादोषधयः फलं गृह्णन्ति[19] ॥ (गोसत्रं वा, एति संवत्सरो, ऽर्धमासा, मिथुनं मध्यतो, देवयानेनैव, वीर्यं, त्रयोदश च १३) ॥१॥

गवामयनस्य दशमासद्वादशमासविकल्पः ॥

गावो वा एतत् सत्रमासताशृङ्गाः सतीः शृङ्गाणि सिषासन्तीस्तासां दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त ता अब्रुवन्नरात्स्मोत् तिष्ठामाव तं काममरुत्स्महि येन कामेन न्यषदामेति तासामु त्वा अब्रुवन्नर्धा वा यावतीर्वाऽसामहा एवेमौ द्वादशौ मासौ संवत्सरꣳ संपाद्योत् तिष्ठामेति तासां (१) द्वादशे मासि शृङ्गाणि प्रावर्तन्त श्रद्धया वाऽश्रद्धया वा ता इमा यास्तूपरा उभय्यो वाव ता आर्ध्नुवन् याश्च शृङ्गाण्यसन्वन् याश्चोर्जमवारुन्धतर्ध्नोति दशसु मास्वुत्तिष्ठन्नृध्नोति द्वादशसु य एवं वेद[3] पदेन खलु वा एते यन्ति विन्दति खलु वै पदेन यन्[4] तद्वा एतदृद्धमयनं तस्मा-(२)-देतद्गोसनि[5] ॥ ( तिष्ठामेति तासां, तस्माद्, द्वे च २ ) ॥२॥

पृष्ठ्यषडहविस्तरः ॥

प्रथमे मासि पृष्ठान्युप यन्ति मध्यम उप यन्त्युत्तम उप यन्ति[1] तदाहुर्यां वै त्रिरेकस्याह्न उपसीदन्ति दुह्रं वै साऽपराभ्यां दोहाभ्यां दुहेऽथ कुतः सा धोक्ष्यते यां द्वादश कृत्व उपसीदन्तीति संवत्सरꣳ संपाद्योत्तमे मासि सकृत् पृष्ठान्युपेयुस्तद्यजमाना यज्ञं पशूनव रुन्धते[2] समुद्रं वा (१) एतेनवारमपारं प्र प्लवन्ते ये संवत्सरमुपयन्ति यद् बृहद्रथंतरे अन्ववेयुर्यथा मध्ये समुद्रस्य प्लवमन्ववेयुस्तादृक् तदनुत्सर्गं बृहद्रथंतराभ्यामित्वा प्रतिष्ठां गच्छन्ति सर्वेभ्यो वै कामेभ्यः संधिर्दुहे तद्यजमानाः सर्वान् कामानव रुन्धते[3] ॥ ( समुद्रं वै, चतुस्त्रिꣳशच्च ३४ ) ॥३॥

उपरे पक्षसि विशेषः ॥

समान्य ऋचो भवन्ति मनुष्यलोको वा ऋचो मनुष्यलोकादेव न यन्त्य[1]न्यदन्यत् साम भवति देवलोको वै साम देवलोकादेवान्यमन्यं मनुष्यलोकं प्रत्यवरोहन्तो यन्ति[2] जगतीमग्र उप यन्ति जगतीं वै छन्दाꣳसि प्रत्यवरोहन्त्या[3]ग्रयणं ग्रहा बृहत् पृष्ठानि त्रयस्त्रिꣳशꣳ स्तोमास्तस्माज्ज्यायाꣳसं कनीयान् प्रत्यवरोहति[4] वैश्वकर्मणो गृह्यते विश्वान्येव तेन कर्माणि यजमाना अव रुन्धत आदित्यो (१) गृह्यत इयं वा अदितिरस्यामेव प्रति तिष्ठन्त्य[5]न्योऽन्यो गृह्येते मिथुनत्वाय प्रजात्या[6] अवान्तरं वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्दशरात्रो भवति प्रजा एव तद्यजमानाः सृजन्त एताꣳ ह वा उदङ्कः शौल्बायनः सत्रस्यर्द्धिमुवाच यद्दशरात्रो यद्दशरात्रो भवति सत्रस्यर्द्ध्या अथो यदेव पूर्वेष्वहःसु विलोम क्रियते तस्यैवै-(२)-षा शान्तिः[7] ॥ (आदित्य,- स्तस्यैव, द्वे च २) ॥४॥

मासद्वयेन प्रवृत्तयोर्द्वयोर्गवामयनयोर्विशेषः ॥

यदि सोमौ सꣳसुतौ स्यातां महति रात्रियै प्रातरनुवाकमुपाकुर्यात् पूर्वो वाचं पूर्वो देवताः पूर्वश्छन्दाꣳसि वृङ्क्ते[1] वृषण्वतीं प्रतिपदं कुर्यात् प्रातःसवनादेवैषामिन्द्रं वृङ्क्ते[2]ऽथो खल्वाहुः सवनमुखेसवनमुखे कार्येति सवनमुखात्सवनमुखादेवैषामिन्द्रं वृङ्क्ते[3] संवेशायोपवेशाय गायत्रिया-

त्रिष्टुभो जगत्या अनुष्टुभः पङ्क्त्या अभिभूत्यै स्वाहा छन्दाꣳसि वै संवेश उपवेशश्छन्दोभिरेवैषां (१) छन्दाꣳसि वृङ्क्ते[५] सजनीयꣳ शस्यं विहव्यꣳ शस्यमगस्त्यस्य कयाशुभीयꣳ शस्यमेतावद्वा अस्ति यावदेतद्यावदेवास्ति तदेषां वृङ्क्ते[६] यदि प्रातःसवने कलशो दीर्येत वैष्णवीषु शिपिविष्टवतीषु स्तुवीरन् यद्वै यज्ञस्यातिरिच्यते विष्णुं तच्छिपिविष्टमभ्यति रिच्यते तद्विष्णुः शिपिविष्टोऽतिरिक्त एवातिरिक्तं दधात्यथो अतिरिक्तेनैवातिरिक्तमाप्त्वाऽव (२) रुन्धते[७] यदि मध्यंदिने दीर्येत वषट्कारनिधनꣳ साम कुर्युर्वषट्कारो वै यज्ञस्य प्रतिष्ठा प्रतिष्ठामेवैनद्गमयन्ति यदि तृतीयसवन एतदेव ॥ ( छन्दोभिरेवैषां,- मव,- कान्नविꣳशतिश्च १९ ) ॥५॥

गवामयनस्य गुणविकाररूपोऽहरुत्सर्गः ॥

षडहैर्मासान्त्संपाद्याहरुत् सृजन्ति षडहैर्हि मासान्त्संपश्यन्त्यर्धमासैर्मासान्त्संपाद्याहरुत् सृजन्त्यर्धमासैर्हि मासान्त्संपश्यन्त्यमावास्यया मासान्त्संपाद्याहरुत् सृजन्त्यमावास्यया हि मासान्त्संपश्यन्ति[३] पौर्णमास्या मासान्त्संपाद्याहरुत् सृजन्ति पौर्णमास्या हि मासान्त्संपश्यन्ति[४] यो वै पूर्ण आसिञ्चति परा स सिञ्चति यः पूर्णादुदचति (१) प्राणमस्मिन्त्स दधाति यत् पौर्णमास्या मासान्त्संपाद्याहरुत् सृजन्ति संवत्सरायैव तत् प्राणं दधति तदनु सत्रिणः प्राणन्ति[५] यदह्नो नोत्सृजेयुर्यथा दृतिरुपनद्धो विपतत्येवꣳ संवत्सरो वि पतेदार्तिमार्च्छेयुर्यत् पौर्णमास्या मासान्त्संपाद्याहरुत् सृजन्ति संवत्सरायैव तदुदानं दधति तदनु सत्रिण उ-(२)-दनन्ति नाऽऽर्तिमार्च्छन्ति पूर्णमासे वै देवानाꣳ सुतो यत् पौर्णमास्या मासान्त्संपाद्याहरुत् सृजन्ति देवानामेव तद्यज्ञेन यज्ञं प्रत्यवरोहन्ति[७] वि वा एतद्यज्ञं छिन्दन्ति यत् षडहसंततꣳ संतमथाहरुत् सृजन्ति प्राजापत्यं पशुमा लभन्ते प्रजापतिः सर्वा देवता देवताभिरेव यज्ञꣳ सं तन्वन्ति यन्ति वा एते सवनाद्येऽह-(३)-रुत् सृजन्ति तुरीयं खलु वा एतत् सवनं यत् सान्नाय्यं यत् सान्नाय्यं भवति तेनैव सवनान्न यन्ति[९] समुपहूय भक्षयन्त्येतत् सोमपीथा ह्येतर्हि[१०] यथायतनं वा एतेषाꣳ सवनभाजो देवता गच्छन्ति येऽहरुत् सृजन्त्यनुसवनं पुरोडाशान् निर्वपन्ति यथायतनादेव सवनभाजो देवता अव रुन्धते[११]ऽष्टाकपालान् प्रातःसवन एकादशकपालान् माध्यंदिने सवने द्वादशकपालाꣳस्तृतीयसवने छन्दाꣳस्येवाऽऽप्त्वा (४) ऽव रुन्धते[१२] वैश्वदेवं चरुं तृतीयसवने निर्वपन्ति वैश्वदेवं वै तृतीयसवनं तेनैव तृतीयसवनान्न यन्ति[१३] ॥ ( उदच,- त्यु,- येऽह,- राप्त्वा, पञ्चदश च १५) ॥६॥

उत्सर्गिणामयनमीमांसा ॥ १४ बृहती।

उत्सृज्याꣳ३ नोत्सृज्याꣳ३मिति मीमाꣳसन्ते ब्रह्मवादिनस्तद्वाहुरुत्सृज्यमेवेत्य[१]मावास्यायां च पौर्णमास्यां चोत्सृज्यमित्याहुरेते हि यज्ञं वहत इति[२] ते त्वाव नोत्सृज्ये इत्याहुर्ये अवान्तरं यज्ञं भेजाते इति[३] या प्रथमा व्यष्टका तस्यामुत्सृज्यमित्याहुरेष वै मासो विशर इति[४] नाऽऽदिष्ट-(१)-मुत्सृजेयुर्यदा-

दिष्टमुत्सृजेयुर्यादृशे पुनः पर्याप्लावे मध्ये षडहस्य संपद्येत षडहैर्मासान्त्संपाद्य यत् सप्तममहस्त-स्मिन्नुत्सृजेयु[६]स्तदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेयुरैन्द्रं दधीन्द्राय मरुत्वते पुरोडाशमेका-दशकपालं वैश्वदेवं द्वादशकपाल[७]मग्नेर्वै वसुमतः प्रातःसवनं यदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपन्ति देवतामेव तद्भागिनीं कुर्वन्ति (२) सवनमष्टाभिरुप यन्ति[८] यदैन्द्रं दधि भवतीन्द्रमेव तद्भागधेयान्न च्यावयन्ती[९]न्द्रस्य वै मरुत्वतो माध्यंदिनꣳ सवनं यदिन्द्राय मरुत्वते पुरोडाशमे-कादशकपालं निर्वपन्ति देवतामेव तद्भागिनीं कुर्वन्ति सवनमेकादशभिरुप यन्ति[१०] विश्वेषां वै देवानामृभुमतां तृतीयसवनं यद्वैश्वदेवं द्वादशकपालं निर्वपन्ति देवता एव तद्भागिनीः कुर्वन्ति सवनं द्वादशभि-(३)-रुप यन्ति[११] प्राजापत्यं पशुमा लभन्ते यज्ञो वै प्रजापतिर्यज्ञस्यानन्नुसर्गा-यो[१२]भिवर्त इतः षण्मासो ब्रह्मसामं भवति ब्रह्म वा अभिवर्तो ब्रह्मणैव तत् सुवर्गं लोकमभिवर्त-यन्तो यन्ति प्रतिकूलमिव हीतः सुवर्गो लोक[१३]

इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा नो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमही[१४]

त्य-(४)-मुत आयतꣳ षण्मासो ब्रह्मसामं भवत्ययं वै लोको ज्योतिः प्रजा ज्योतिरिममेव तल्लोकं पश्यन्तोऽभिवदन्त आ यन्ति[१५] ॥ ( नाऽऽदिष्टं,- कुर्वन्ति, द्वादशभि,- रिति, विꣳशतिश्च २० ) ॥७॥

गवामयनसम्बन्धिमहाव्रते सामविशेषाः ॥

देवानां वा अन्तं जग्मुषामिन्द्रियं वीर्यमपाक्रामत् तत् क्रोशेनावारुन्धत तत् क्रोशस्य क्रोशत्वं यत् क्रोशेन चात्वालस्यान्ते स्तुवन्ति यज्ञस्यैवान्तं गत्वेन्द्रियं वीर्यमव रुन्धते[१] सत्रस्यर्द्ध्याऽऽह-वनीयस्यान्ते स्तुवन्त्यग्निमेवोपद्रष्टारं कृत्वर्द्धिमुप यन्ति[२] प्रजापतेर्हृदयेन हविर्धानेऽन्तः स्तुवन्ति प्रेमाणमेवास्य गच्छन्ति[३] श्लोकेन पुरस्तात् सदसः (१) स्तुवन्त्यनुश्लोकेन पश्चाद्यज्ञस्यैवान्तं गत्वा श्लोकभाजो भवन्ति[४] नवभिरध्वर्युरुद्गायति नव वै पुरुषे प्राणाः प्राणानेव यजमानेषु दधाति[५] सर्वा ऐन्द्रियो भवन्ति प्राणेष्वेवेन्द्रियं दधत्य[६]प्रतिहृताभिरुद्गायति तस्मात् पुरुषः सर्वाण्यन्यानि शीर्ष्णोऽङ्गानि प्रत्यञ्चति शिर एव न[७] पञ्चदशꣳ रथन्तरं भवतीन्द्रियमेवाव रुन्धते सप्तदशं (२) बृहदन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायन्ते[८] एकविꣳशं भद्रं द्विपदासु प्रतिष्ठित्यै[९] पत्नय उप गायन्ति मिथुनत्वाय प्रजात्यै[१०] प्रजापतिः प्रजा असृजत सोऽकामयताऽऽसामहꣳ राज्यं परी-यामिति तासाꣳ राजनेनैव राज्यं पर्यैत् तद्राजनस्य राजनत्वं यद्राजनं भवति प्रजानामेव तद्यज-माना राज्यं परि यन्ति[११] पञ्चविꣳशं भवति प्रजापते-(३)-राप्त्यै[१२] पञ्चभिस्तिष्ठन्तः स्तुवन्ति

( ७।१४ ) ऋ० ७,३२,२६; सा० २५९,१४५६; अथर्व० १८,३,६७; २०,७९,१ ।

देवलोकमेवाभि जयन्ति पञ्चभिरासीना मनुष्यलोकमेवाभि जयन्ति दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धते[13] पञ्चधा विनिषद्य स्तुवन्ति पञ्च दिशो दिक्ष्वेव प्रति तिष्ठन्त्ये[14]कैकयाऽस्तुतया समायन्ति दिग्भ्य एवान्नाद्यꣳ सं भरन्ति[15] ताभिरुद्गातोद्गायति दिग्भ्य एवान्नाद्यꣳ (४) संभृत्य तेज आत्मन् दधते तस्मादेकः प्राणः सर्वाण्यङ्गान्यवत्यथो यथा सुपर्ण उत्पतिष्यञ्छिर उत्तमं कुरुत एवमेव तद्यजमानाः प्रजानामुत्तमा भवन्त्या[16]सन्दीमुद्गाताऽऽरोहति साम्राज्यमेव गच्छन्ति प्लेङ्खꣳ होता नाकस्यैव पृष्ठꣳ रोहन्ति कूर्चावध्वर्युर्ब्रध्नस्यैव विष्टपं गच्छन्त्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति (५) तिष्ठन्त्यथो आक्रमणमेव तत् सेतुं यजमानाः कुर्वते सुवर्गस्य लोकस्य समष्ट्यै[17] ॥ ( सदंसः. सप्तदश. प्रजापते,- गायति दिग्भ्य एवान्नाद्यं, प्रत्ये,- कादश च ११ ) ॥८॥

शततन्तुवीणादिविधिः ॥

अर्क्येण वै सहस्रशः प्रजापतिः प्रजा असृजत ताभ्य इलान्देनेरां लूतामवारुन्ध यदर्क्यं भवति प्रजा एव तद्यजमानाः सृजन्त इलान्दं भवति प्रजाभ्य एव सृष्टाभ्य इरां लूतामव रुन्धते तस्माद्याꣳ समाꣳ सत्रꣳ समृद्धं क्षोधुकास्ताꣳ समां प्रजा इषꣳ ह्यासामूर्जमाददते याꣳ समां व्यृद्धमक्षोधुकास्ताꣳ समां प्रजाः (१) न ह्यासामिषमूर्जमाददते उत्क्रोदं कुर्वते यथा बन्धान्मुमुचाना उत्क्रोदं कुर्वत एवमेव तद्यजमाना देवबन्धान्मुमुचाना उत्क्रोदं कुर्वत इषमूर्जमात्मन् दधाना[2] वाणः शततन्तुर्भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठन्त्या[3]जिं धावन्त्यनभिजितस्याभिजित्यै[4] दुन्दुभीन्त्समाघ्नन्ति परमा वा एषा वाग्या दुन्दुभौ परमामेव (२) वाचमव रुन्धते[5] भूमिदुन्दुभिमा घ्नन्ति यैवेमां वाक् प्रविष्टा तामेवाव रुन्धते ऽथो इमामेव जयन्ति[6] सर्वा वाचो वदन्ति सर्वासां वाचामवरुद्ध्या आर्द्रे चर्मन् व्यायच्छेते इन्द्रियस्यावरुद्ध्या आऽन्यः क्रोशति प्रान्यः शꣳसति य आक्रोशति पुनात्येवैनान्त्स यः प्रशꣳसति पूतेष्वेवान्नाद्यं दधात्यृ[षि]कृतं च (३) वा एते देवकृतं च पूर्वैर्मासैरव रुन्धते यद्भूतेच्छदाꣳ सामानि भवन्त्युभयस्यावरुद्ध्यै[10] यन्ति वा एते मिथुनाद्ये संवत्सरमुपयन्त्यन्तर्वेदि मिथुनौ सं भवतस्तेनैव मिथुनान्न यन्ति[11] ॥ ( व्यृद्धमक्षोधुकास्ताꣳ समां प्रजाः, परमामेव, च, त्रिꣳशच्च ३० ) ॥९॥

दासीनृत्यम् ॥

चर्मावं भिन्दन्ति पाप्मानमेवैषामव भिन्दन्ति[1] माऽप रात्सीर्माऽति व्यात्सीरित्याह संप्रत्यैवैषां पाप्मानमव भिन्दन्त्यु[2]दकुम्भानधिनिधाय दास्यो मार्जालीयं परि नृत्यन्ति पदो निघ्नतीरिदंमधु गायन्त्यो मधु वै देवानां परममन्नाद्यं परममेवान्नाद्यमव रुन्धते पदो नि घ्नन्ति महीयामेवैषु दधति[3] ॥ ( चर्मैकान्नपञ्चाशत् ४९ ) ॥१०॥

अश्वमेधाङ्गा अन्नहोममन्त्राः ॥

पृथिव्यै स्वाहा ऽन्तरिक्षाय स्वाहा दिवे स्वाहा संप्लोष्यते स्वाहा संप्लवमानाय स्वाहा संप्लुताय स्वाहा मेघायिष्यते स्वाहा मेघायते स्वाहा मेघिताय स्वाहा मेघाय स्वाहा नीहाराय स्वाहा निहाकायै स्वाहा प्रासचाय स्वाहा प्रचलाकायै स्वाहा विद्योतिष्यते स्वाहा विद्योतमानाय स्वाहा संविद्योतमानाय स्वाहा स्तनयिष्यते स्वाहा स्तनयते स्वाहोग्रꣳ स्तनयते स्वाहा वर्षिष्यते स्वाहा वर्षते स्वाहा ऽभिवर्षते स्वाहा परिवर्षते स्वाहा संवर्षते (१) स्वाहा ऽनुवर्षते स्वाहा शीकायिष्यते स्वाहा शीकायते स्वाहा शीकिताय स्वाहा प्रोषिष्यते स्वाहा प्रुष्णते स्वाहा परिप्रुष्णते स्वाहोद्ग्रहीष्यते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा विप्लोष्यते स्वाहा विप्लवमानाय स्वाहा विप्लुताय स्वाहा ऽऽतप्स्यते स्वाहा ऽऽतपते स्वाहोग्रमातपते स्वाहर्ग्भ्यः स्वाहा यजुर्भ्यः स्वाहा सामभ्यः स्वाहा ऽङ्गिरोभ्यः स्वाहा वेदेभ्यः स्वाहा गाथाभ्यः स्वाहा नाराशꣳसीभ्यः स्वाहा रैभीभ्यः स्वाहा (२) सर्वस्मै स्वाहा ॥ ( संवर्षते, रैभीभ्यः स्वाहा, द्वे च २ ) ॥११॥

शरीरहोममन्त्राः ॥

दत्वते स्वाहा ऽदन्तकाय स्वाहा प्राणिने स्वाहा ऽप्राणाय स्वाहा मुखवते स्वाहा ऽमुखाय स्वाहा नासिकवते स्वाहा ऽनासिकाय स्वाहा ऽक्षण्वते स्वाहा ऽनक्षिकाय स्वाहा कर्णिने स्वाहा ऽकर्णकाय स्वाहा शीर्षण्वते स्वाहा ऽशीर्षकाय स्वाहा पद्वते स्वाहा ऽपादकाय स्वाहा प्राणते स्वाहा ऽप्राणते स्वाहा वदते स्वाहा ऽवदते स्वाहा पश्यते स्वाहा ऽपश्यते स्वाहा शृण्वते स्वाहा ऽशृण्वते स्वाहा मनस्विने स्वाहा (१) ऽमनसे स्वाहा रेतस्विने स्वाहा ऽरेतस्काय स्वाहा प्रजाभ्यः स्वाहा प्रजननाय स्वाहा लोमवते स्वाहा ऽलोमकाय स्वाहा त्वचे स्वाहा ऽत्वक्काय स्वाहा चर्मण्वते स्वाहा ऽचर्मकाय स्वाहा लोहितवते स्वाहा ऽलोहिताय स्वाहा माꣳसन्वते स्वाहा ऽमाꣳसकाय स्वाहा स्नावभ्यः स्वाहा ऽस्नावकाय स्वाहा ऽस्थन्वते स्वाहा ऽनस्थिकाय स्वाहा मज्जन्वते स्वाहा ऽमज्जकाय स्वाहा ऽङ्गिने स्वाहा ऽनङ्गाय स्वाहा ऽऽत्मने स्वाहा ऽनात्मने स्वाहा (२) सर्वस्मै स्वाहा ॥ ( मनस्विने स्वाहा, ऽनात्मने स्वाहा, द्वे च २ ) ॥१२॥

---

(११) वा० य० २२,२६—२७,२९; ३९,१ । काठ० [ अश्व० ] ५,२ । पृथिव्यै स्वाहा । अथर्व० ५,९,१,६ । अन्तरिक्षाय स्वाहा । अथर्व० ५,९,३—४ । दिवे स्वाहा । अथर्व० ५,९,१,५ ।

(१२) वा० य० ३९,१० । काठ० [ अश्व० ] ५,३ ।

परिधिमन्त्राः ॥

कस्त्वा युनक्ति स त्वा युनक्तु विष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्द्ध्यै मह्य२ संनत्या अमुष्मै कामायाऽऽयुषे त्वा प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा घोषाय त्वा पोषाय त्वाऽऽराद्घोषाय त्वा प्रच्युत्यै त्वा ॥ (कोऽष्टात्रि॑शत ३८) ॥१३॥

सर्वपृष्ठेष्टि ॥

अग्नये गायत्राय त्रिवृते राथंतराय वासन्तायाष्टाकपाल इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्मायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकवि॑शाभ्यां वैराजाभ्या॑ शारदाभ्यां पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय चरुः सवित्र आतिच्छन्दसाय त्रयस्त्रि॑शाय रैवताय शैशिराय द्वादशकपालोऽदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्यै चरुः काय एककपालः ॥ (अग्नये गायत्रायादित्या अनुमत्यै चरुः सप्तचत्वारि॑शत् ४७) ॥१४॥

सर्वपृष्ठेष्टिप्रयोगः ॥

यो वा अग्नावग्निः प्रह्रियते यश्च सोमो राजा तयोरेष आतिथ्यं यदग्नीषोमीयोऽथैष रुद्रो यश्चीयते यत् संचितेऽग्नावेतानि हवी॑षि न निर्वपेदेष एव रुद्रोऽशान्त उपोत्थाय प्रजां पशून् यजमानस्याभि मन्येत यत् संचितेऽग्नावेतानि हवी॑षि निर्वपति भागधेयेनैवैन॑ शमयति नास्य रुद्रोऽशान्त (१) उपोत्थाय प्रजां पशूनभि मन्यते दश हवी॑षि भवन्ति नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव यजमाने दधात्यथो दशाक्षरा विराडन्नं विराड् विराज्येवान्नाद्ये प्रति तिष्ठत्यृतुभिर्वा एष छन्दोभिः स्तोमैः पृष्ठैश्चेतव्य इत्याहुर्यदेतानि हवी॑षि निर्वपत्यृतुभिरेवैनं छन्दोभिः स्तोमैः पृष्ठैश्चिनुते दिशः सुषुवाणेना-(२)-भिजित्या इत्याहुर्यदेतानि हवी॑षि निर्वपति दिशामभिजित्या एतया वा इन्द्रं देवा अयाजयन् तस्मादिन्द्रसव एतया मनुं मनुष्यास्तस्मान्मनुसवो यथेन्द्रो देवानां यथा मनुर्मनुष्याणामेवं भवति य एवं विद्वानेतयेष्ट्या यजते दिग्वतीः पुरोऽनुवाक्या भवन्ति सर्वासां दिशामभिजित्यै ॥ (अस्य रुद्रोऽशान्तः, सुषुवाणेन,- चत्वारि॑शच्च ४१) ॥१५॥

[ १६-१७ ] महिमग्रहः ॥ त्रिष्टुप् ।

य॒ः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।

य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥

---

(१३) वा० य० १,६,२०;२,२३,७,३,१४,२१-२२; काठ० [अश्व०] ५,९। (१४) वा० य० २९,६०; मै ३,१५,१०; काठ० [अश्व०]५,१०। (१६) वा०य० २३,३-४;२५,११ काठ०[अश्व०] ५,१३। यः प्राणतो निमिषतो०। ऋ० १०,१२१,३; अथर्व० ४,२,१-२।

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते द्यौर्महिमा नक्षत्राणि रूपमादित्यस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा[१] ॥ ( यः प्राणतो द्यौरादित्योऽष्टात्रिंशत् ३८ ) ॥१६॥

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते पृथिवी महिमौषधयो वनस्पतयो रूपमग्निस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा[१] ॥ ( य आत्मदा पृथिव्यग्नि,- रेकान्नचत्वारिंशत् ३९ ) ॥१७॥

ब्रह्मवर्चसहोमः ॥

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतां[१]—माऽस्मिन् राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां[२] दोग्ध्री धेनु[३]—र्वोढाऽनड्वा[४]—नाशुः सप्तिः[५] पुरन्धिर्योषा[६] जिष्णू रथेष्ठाः सभेयो युवा ऽस्य यजमानस्य वीरो जायतां[७] निकामेनिकामे नः पर्जन्यो वर्षतु फलिन्यो न ओषधयः पच्यन्तां[८] योगक्षेमो नः कल्पताम्[९] ॥ ( आ ब्रह्मन्नेकचत्वारिंशत् ४१ ) ॥१८॥

अश्वानुमन्त्रणम् ॥

आऽक्रान् वाजी पृथिवीमग्निं युजमकृत वाज्यर्वा[१] ऽऽक्रान् वाज्यन्तरिक्षं वायुं युजमकृत वाज्यर्वा[२] द्यां वाज्याऽक्रꣳस्त सूर्यं युजमकृत वाज्यर्वा[३] ऽग्निस्ते वाजिन् युङ्ङ्नु त्वा ऽऽ रभे स्वस्ति मा सं पारय[४] वायुस्ते वाजिन् युङ्ङ्नु त्वा ऽऽ रभे स्वस्ति मा सं (१) पारय[५] ऽऽदित्यस्ते वाजिन् युङ्ङ्नु त्वा ऽऽ रभे स्वस्ति मा सं पारय[६] प्राणधृगसि प्राणं मे दृꣳह[७] व्यानधृगसि व्यानं मे दृꣳहा[८]—पानधृगस्यपानं मे दृꣳह[९] चक्षुरसि चक्षुर्मयि धेहि[१०] श्रोत्रमसि श्रोत्रं मयि धेह्या[११]—युरस्यायुर्मयि धेहि[१२] ॥ ( वायुस्ते वाजिन् युङ्ङ्नु त्वा ऽऽ रभे स्वस्ति मा सं, त्रिचत्वारिꣳशच्च ४३) ॥१९॥

अन्नहोममन्त्राः ॥

जज्ञि बीजं[१] वर्ष्टा पर्जन्यः[२] पक्ता सस्यꣳ[३] सुपिप्पला ओषधयः[४] स्वधिचरणेयꣳ[५] सूपसदनोऽग्निः[६] स्वध्यक्षमन्तरिक्षꣳ[७] सुपावः पवमानः[८] सूपस्थाना द्यौः[९] शिवमसौ तपन्[१०] यथापूर्वमहोरात्रे[११] पञ्चदशिनोऽर्धमासा[१२]—स्त्रिꣳशिनो मासाः[१३] क्लृप्ता ऋतवः[१४] शान्तः संवत्सरः[१५] ॥ ( जज्ञ्येकत्रिꣳशत् ३१ ) ॥२०॥

---

(१७) ऋ० १०,१२१,२; वा०य० २५,१३; अथर्व० ४,२,१-२;१३,३,२४ । (१८) वा०य० २२,२२; मै० ३,१२,८; काठ० [अश्व०] ५,१७ । (१९) वा० य० ४,३;११,१९; मै० २,७,११; काठ० [अश्व०] ५,१८ । चक्षुर्दा असि चक्षुर्मे देहि । वा०य० ४,३; चक्षुरसि चक्षुर्मे दाः...... । अथर्व० । २,१७,६, (२०) काठ० [अश्व० ] ५,२० ।

अश्वस्य रोगादिनिमित्ते प्रायश्चित्तिः ॥

आग्नेयोऽष्टाकपालः सौम्यश्चरुः सावित्रोऽष्टाकपालः पौष्णश्चरू रौद्रश्चरुरग्नये वैश्वानराय द्वादशकपालो मृगाखरे यदि नाऽऽगच्छेदग्नयेऽꣳहोमुचेऽष्टाकपालः सौर्यं पयो वायव्य आज्यभागः[1] ॥ ( आग्नेयश्चतुर्विꣳशतिः २४ ) ॥२१॥

मृगारेष्टिः ॥

अग्नयेऽꣳहोमुचेऽष्टाकपाल[1] इन्द्रायाꣳहोमुच एकादशकपालो[2] मित्रावरुणाभ्यामागोमुग्भ्यां पयस्या[3] वायोसावित्र आगोमुग्भ्यां चरुꣳ रश्विभ्यामागोमुग्भ्यां धाना[4] मरुद्भ्य एनोमुग्भ्यः सप्तकपालो[6] विश्वेभ्यो देवेभ्य एनोमुग्भ्यो द्वादशकपालो[7]ऽनुमत्यै चरुꣳ रग्नये वैश्वानराय द्वादशकपालो[9] द्यावापृथिवीभ्यामꣳहोमुग्भ्यां द्विकपालः[10] ॥ ( अग्नयेऽꣳहोमुचे त्रिꣳशत् ३० ) ॥२२॥

सन्नतिहोमाः ॥

अग्नये समनमत् पृथिव्यै समनमद्यथाऽग्निः पृथिव्या समनमदेवं मह्यं भद्राः संनतयः सं नमन्तु वायवे समनमदन्तरिक्षाय समनमद्यथा वायुरन्तरिक्षेण सूर्याय समनमꣳ दिवे समनमद्यथा सूर्यो दिवा चन्द्रमसे समनमꣳ[3] नक्षत्रेभ्यः समनमद्यथा चन्द्रमा नक्षत्रैर्वरुणाय समनमꣳ दद्भ्यः समनमद्यथा (१) वरुणोऽद्भिः साम्ने समनमꣳ[5] दृचे समनमद्यथा साम्नर्चा ब्रह्मणे समनमत्[6] क्षत्राय समनमद्यथा ब्रह्म क्षत्रेण राज्ञे समनमꣳ द्विशे समनमद्यथा राजा विशा रथाय समनमꣳ दश्वेभ्यः समनमद्यथा रथोऽश्वैः प्रजापतये समनमꣳ द्भूतेभ्यः समनमद्यथा प्रजापतिर्भूतैः समनमदेवं मह्यं (२) भद्राः संनतयः सं नमन्तु[10] ॥ ( अग्नयः समनमद्यथा, मह्यं, चत्वारि च ४ ) ॥२३॥

यजमानेन वाचनीयं ॥ १ त्रिष्टुप् ।

ये ते पन्थानः सवितः पूर्व्यासोऽरेणवो विंतता अन्तरिक्षे ।
तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च देव ब्रूहि[1] ॥

नमोऽग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि[2] नमो वायवेऽन्तरिक्षक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि[3] नमः सूर्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि[4] ॥ ( ये ते चतुश्चत्वारिꣳशत् ४४ ) ॥२४॥

विराड्रूपेणाश्वोपासनप्रतिपादनम् ॥

यो वा अश्वस्य मेध्यस्य शिरो वेद शीर्षण्वान् मेध्यो भवत्युꣳषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणश्चन्द्रमाः श्रोत्रं दिशः पादा अवान्तरदिशाः पर्शवोऽहोरात्रे निमेषोऽर्धमासाः

(२१) वा०य० २९,६०; मै० ३,१०,१; २,६,१; काठ० [अश्व०] ५,२१। (२२) मै० ३,१५,११; काठ० [अश्व०] ५,२२।
(२३) काठ० [अश्व०] ५,२३। (२४) ऋ० १,३५,११; वा० य० ३४,२७; काठ० [अश्व०] १,१-२। ये ते पन्थाः सवितः० । ऋ० १,३५,११। ये ते पन्थानोऽव दिवो येभिर्विश्वमैरयः। तेभिः सुम्नया धेहि नो वसो। अथर्व० ७,५५,१।

पर्वाणि मासाः संधानान्यृतवोऽङ्गानि संवत्सर आत्मा रश्मयः केशा नक्षत्राणि रूपं तारका अस्थानि नभो माꣳसान्योषधयो लोमानि वनस्पतयो वाला अग्निर्मुखं वैश्वानरो व्यात्तं (१) समुद्र उदरमन्तरिक्षं पायुर्द्यावापृथिवी आण्डौ ग्रावा शेपः सोमो रेतो यज्जंजभ्यते तद्वि द्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाग्यहर्वा अश्वस्य जायमानस्य महिमा पुरस्ताज्जायते रात्रिरेनं महिमा पश्चादनु जायत एतौ वै महिमानावश्वमभितः सं बभूवतुर्हयो देवानवह-(२)-द्वाऽसुरान् वाजी गन्धर्वानश्वो मनुष्यान्त्समुद्रो वा अश्वस्य योनिः समुद्रो[३] [बन्धुः]* ॥ (व्यात्त,-मवहद्, द्वादश च १२ ) ॥२५॥

[ गावो २११। गावः १०२। प्रथमे ८४। संमान्यां १०२। यदि ११९। पडहे- २१५। -रूपसृष्यां२ २२०। देवाना-२६१। -मक्वेण १८०। चर्मं ४९। पृथिव्यै १०२। दृदवते १०२। कां ३८। ऽश्ये ४७। यो १४१। यो ३८। य ३९। आ ४१। आ ५३। जङ्यां- ३१। -ग्नेयो २४। ऽश्ये ३०। ऽश्ये १०४। ये ४४। यः ११२। ( पञ्चविꣳशतिः ॥२५॥ २६३१ ) ]

[ इति सप्तमकाण्डे पञ्चमः प्रपाठकः ॥५॥]

[ प्रजननं २६२५। साध्याः २३३०। प्रजवं २१२३। बृहस्पति- २६२१। -रात्रिः २६३१। ( पञ्च ॥५॥ १२३३० ) ]

॥ इति सप्तमं काण्डं सम्पूर्णम् ॥७॥

[ इषे १६५८२। वायव्यं १९२७३। प्रजापति- १०६२२। -युञ्जानः १४१०५। आग्नेयाणि १९४०४। प्राचीनꣳशं १६९९२। प्रजननं० १२३३०। ( सप्त ॥७॥ १०९३०८ ) ]

॥ इति तैत्तिरीयसंहिता समाप्ता ॥

---

* 'समुद्रो बन्धुः' यद्यप्यत्र संहितायां पदपाठे च बन्धुरिति पदं वैदिका न पठन्ति, तथाऽपि भाष्यकारसंमतत्वात् 'व्यात्तमवहद् द्वादश च' इति वैदिकसंप्रदायानुरोधिप्रतीकवाक्योक्तद्वादशसंख्यापूरणार्थमावश्यकत्वाच्चात्र स्थापितम् ।

# तैत्तिरीय-संहिताया अनुवाकसूची

## काण्ड-प्रपाठकानुवाकाङ्कसमेता ।

## यजुर्वेदीय-

## तैत्तिरीय-संहिता-मन्त्राणां

# वर्णानुक्रमसूची।

[ काण्ड-प्रपाठकानुवाक-मन्त्राङ्क-समेता। ]

आत्मा वा एष यज्ञस्य ६,४,११,९; ५,१०,८
आत्मा वै पुरुषस्य २,३,२,२०
आत्मा ह्युपहूतानां वसिष्ठः २,६,७,९
आ त्रयस्त्रिंशतो जुहोति ५,४,८,१९
आ त्वा जिघर्मि वचसा ४,१,२,१८; ५,१,३,९
आ त्वाऽहार्षमन्तरभूः ४,२,१,११
आ त्वाऽहार्षमित्याहाऽऽह्येनं५,२,१,५
आदकां खादेन ५,७,११,३
आ ददे १,१,९,१; ३,८,१; ४,१,१
आ दधिक्राः शवसा पञ्च १,५,११,१२
आदित् पश्याम्युत वा ५,६,१,१०
आदित्यग्रहो भूयिष्ठाभिः६,५,१०,३
आदित्यं गर्भं पयसा ४,२,१०,१
आदित्यं चरुं निर्वपति १,८,१,६
आदित्यं चरुं निर्वपेत् २,२,६,१
आदित्यवद्गणस्य सोम ३,२,५,७
आदित्यस्ते वाजिन् युङ्क्तु ७,५,१९,६
आदित्या अकामयन्त ७,३,४,१; ४,६,१
आदित्यान्छ्मश्रुभिः ५,७,१२,३
आदित्या देवता ४,३,७,३१
आदित्याः पञ्चदशाक्षरेण१,७,११,१५
आदित्यानां तृतीया ५,७,१७,८
आदित्यानामवसा २,१,११,२०
आदित्यानां भागोऽसि ४,३,९,७
आदित्यानां भागोऽसीति ५,३,४,६
आदित्यां मह्यां गर्भिणीम् १,८,१९,२
आदित्या वा अस्माल्लोकात् १,५,४,१९
आदित्याश्चाङ्गिरसश्च ३,५,१,५
आदित्याऽसि १,२,५,४
आदित्यास्त्वा कृण्वन्तु ४,१,५,१५
आदित्यास्त्वाऽऽच्छृन्दन्तु ४,१,६,११
आदित्यास्त्वाऽञ्जन्तु ७,४,२०,६
आदित्यास्त्वा धूपयन्तु ४,१,६,३
आदित्यास्त्वा परि १,१,९,१९
आदित्यास्त्वा प्र वृहन्तु ३,३,३,३
आदित्यास्त्वा विश्वैर्देवैः ५,५,९,१३
आदित्येभिर्देवेभिर्देवतया ७,१,१८,३
आदित्येभ्यस्त्वा १,१,१३,५
आदित्येभ्यो धारयद्भ्यः २,३,१,२
आदित्येभ्यो भुवद्भ्यः २,३,१,१
आदित्येष्टका उप दधाति ५,३,१०,७
आदित्यैर्नो भारती वष्टु ५,१,११,८
आदित्यो भवती यं वा ५,५,१,१५
आदित्यो वा अस्मान् १,५,९,८
आदिशः १ ३,१०,८
आ देवयजं वह १,१,७,४
आ देवानाꣳ ४,२,११,१२
आ देवानामपि १,१,१४,१०
आ न एतु मनः पुनः १,८,५,११
आ नः प्राण एतु परावतः ३,३,३,२३
आनन्दं नन्दथुना ५,७,१९,१
आ नो दिवः २,५,१२,८; ३,१,११, १०
आ नो दिवो बृहतः १,८,२२,४
आ नो मित्रावरुणा घृतैः १,८,२२,८; २,५,१२,२०
आ नो वीरो जायतां १,२.१३,३
आन्तमन्ववत्स्रावयति ६,२,१०,१५
आन्त्यश्च १,७,९,१४
आन्त्यायनश्च १,७,९,१३
आऽन्यः क्रोशति प्रान्यः ७,५,९,९
आऽन्यं दिवः २,३,१४,१०
आप उन्दन्तु जीवसे १,२,१,१
आप उप प्र वर्तयति ६,५,८,१५
आपतये त्वा गृह्णामि १,२,१०,११; ६,२,२,४
आपं त्वाऽग्न उपसद्भिः ५,५,७,१४
आपं त्वाऽग्ने तपसा ५,५,७,१२
आपं त्वाऽग्ने दक्षिणाभिः ५,५,७,१६
आपं त्वाऽग्ने दीक्षया ५,५,७,१३
आपं त्वाऽग्ने मनसा ५,५,७.११
आपं त्वाऽग्नेऽवभृथेन ५,५,७,१७
आपं त्वाऽग्ने सुत्यया ५,५,७,१५
आपं त्वाऽग्ने वशया ५,५,७,१८
आपं त्वाऽग्ने स्वगाकारेण ५,५,७,१९
आपल्लायिताय स्वाहा ७,१,१३,८
आपान ध्रुगस्यपानं ७,५,१९,९
आपान्तमन्युः २,२,१२,१४
आपूर्याः स्थाऽऽमा पूरयत ३,२,५,१४
आपो अस्मान् मातरः १,२,१,६
आपोऽश्नाति १,६,७,१३
आपो देवीः प्रति गृह्णीत ४,२,३,६
आपो देवीः शुद्धायुवः १,३,८,१६
आपो देवीरग्रेपुवः १,१,५,२
अपो देवीरुप सृज ४,१,२,१६
आपो देवीर्बृहतीः १,२,२,५; ६,१.२, ६,८
आपो देवीर्मधुमतीः १,८,११,१६
आपो भद्रा घृतमिदापः ५,६,१,९
आपो भवन्त्यापो वा अग्नेः ५,६,२,२
आपो वरुणस्य पत्नयः ५,५,४,१
आपो वा इदमग्रे सलिलम् ५,६,४,९; ७,५,१०; ७,१,५,१
आपो ह यत् २,२,१२,२
आपो ह यन्महतीर्विश्वम् ४,१,८,१९
आपो हि ष्ठा मयोभुवः ४,१,५,२; ५,६,१,११; ७,४,१९,१६
आप्तं मनः १,८,१५,७
आप्ते देवयजने याजयेत् ६,२,६,४
आप्नोत्येव भ्रातृव्यं नैनं ६,२,६,६
आ प्रतिष्ठायै खनति २,६,४,१०
आ प्यायतां ध्रुवा घृतेन १,६,५,१; ७,५,२
आ प्यायध्वमघ्निया १,१,१,५
आप्यायन्तामापः १,१,१३,८
आ प्यायस्व २,३,१४,१२; ५,१२,३; ३,१,११,३
आ प्यायस्व मदिन्तमः १,४,३२,१
आ प्यायस्व समेतु ते ३,२,५,८; ४,२,७,१२
आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी ७,५, १८,१
आभिष्टे अद्य गीर्भिः ४,४,४,२४
आमनमस्यामनस्य २,३,९,४,६,१०

यैव वरः कल्याणी रूपसमृद्धा७,१,६,८
यो अग्निरग्नेस्तपसः ४,२,१०,९
यो अर्वन्तं जिघाꣳसति ७,४,१५,१
यो अस्मभ्यमरातीयाद्यश्च ४,१,१०,८
योक्त्रं गृध्राभिः ५,७,१४,१
योगक्षेमो नः कल्पताम् ७,५,१८,१०
यो गतमनाः स्यात् सः ६,६,७,६
यो गतश्रीः स्यान्मथित्वा ५,१,९,९
योगेयोगे तवस्तरं४,१,२,४;५,१,२,४
यो जात एव प्रथमः १,७,१३,५
यो ज्येष्ठबन्धुरपभूतः ३,४,८,१६
यो ज्योगामयावी स्यात् २,३,११,२; ७,२,४,५
यो द्रप्सो अꣳशुः पतितः ३,१,१०,४
यो न इन्द्रवायू ३,२,१०,१३
यो नः पिता जनिता यः ४,६,२,३
योनिर्वै यज्ञस्य चात्वालं ६,४,३,११
योनिश्चतुर्विꣳशः ४,३,८,१०; ५,३,३,१०
यो नो अग्निः पितरो हृत्सु ५,७,९,२
यो नो मर्तो वसवो ४,३,१३,११
यो ब्रह्मवर्चसकामः २,१,२,७; ४,२; ८,२
यो ब्राह्मण आनुजावरः २,३,४,६
यो भूतिकामः स्याद्यः ५,१,९,१०
यो भ्रातृव्यवान्स्यात् २,१,४,१०; ४,१,२; २,२; ३,५; ५,४,३; ३,४,६,४
यो मृत्योर्बिभीयात् २,३,२,२
यो मेऽन्ति दूरेऽरातीयति १,६,३,२
यो यज्ञविभ्रष्टः स्यात् २,३,३,२
यो राजन्य आनुजावरः २,३,४,५
यो राष्ट्रादपभूतः स्यात् ३,४,८,६
यो रुद्रो अग्नौ यो अप्सु ५,५,९,९
यो रेतस्वी स्यात् प्रथमायां ५,५,४,४
योऽलꣳ श्रियै सन् २,२,८,१०
यो वनस्पतीनां फलग्रहिः ५,१,१,१७
यो वरुणगृहीतः स्यात् २,१,१,२
यो वः शिवतमो रसः ४,१,५,३; ५,६,१,१२; ७,४,१९,१७
यो वा अग्नावग्निः ७,५,१५,१
यो वा अग्निं चितं प्रथमः ५,४,४,८
यो वा अग्निमृतुस्थां वेद ५,७,६,१४
यो वा अग्निं प्रत्यङ्कुप १,५,९,१५
यो वा अग्निं प्रयुज्य न ५,५,१०,१६
यो वा अग्निं योग आगते ५,५,३,२
यो वा अग्निꣳ सर्वतोमुखं ५,७,९,७
यो वा अध्वर्योः प्रतिष्ठां ३,१,२,६
यो वा अध्वर्योः स्वं वेद ३,१,२,८
यो वा अपनाभिमग्निं ५,२,८,१०
यो वा अपशीर्षाणमग्निं ५,५,४,६
यो वा अपात्मानमग्निं ५,५,८,९
यो वा अयथादेवतं ३,१,६,१; ५,७,१,१
यो वा अरत्निꣳ सामिधे २,५,७,१४
यो वा अश्वोरायतनं ६,६,१०,६
यो वा अश्वस्य मेध्यस्य ७,५,२५,१
यो वा अस्य पशुमत्ति ७,२,१०,९
यो वा इष्टकानां प्रतिष्ठां ५,५,६,९
यो वा उपद्रष्टारमुपश्रोतारं ३,३,८,१३
यो वा एतासामायतनं ५,६,२,१०
यो वामिन्द्रावरुणौ २,३,१३,५-६, १९-२०
यो वाꣳ स्थ ऋजुरश्मिः ४,७,१५,६
यो विदग्धः स नैर्ऋतः २,६,३,७
यो वै गायत्रीं ज्योतिः ७,२,९,३
यो वै ग्रहाणां निदानं ६,५,११,५
यो वै ग्रहाणां मिथुनं ६,५,११,६
यो वै तानूनप्त्रस्य प्रतिष्ठां ३,१,२,४
यो वै दश यज्ञायुधानि १,६,८,१०
यो वै देवान् देवयशसेन ३,१,९,१
यो वै देवेभ्यः १,६,८,११
यो वै पवमानस्य सन्ततिं ३,२,१,२
यो वै पवमानानाम् ३,२,१,१
यो वै पूर्ण आसिञ्चति ७,५,६,५
यो वै प्रजातेन १,६,९,४
यो वै प्रजापतये ५,७,१,३
यो वै प्रयाजानां मिथुनं २,६,१,९
यो वै यज्ञं प्रयुज्य न १,७,६,१४
यो वै यज्ञं योगः १,६,८,१७
यो वै यज्ञस्य द्वौ दोहौ १,७,४,५
यो वै यज्ञस्य प्रायणं १,६,११,३
यो वै वसोर्धारायै ५,७,३,१०
यो वै विराजो यज्ञमुखे ६,२,११,१५
यो वै श्रद्धामनारभ्य १,६,८,१
यो वै सप्तदशं प्रजापतिं १,६,११,१
यो वै संवत्सरं प्रयुज्य २,२,६,८
यो वै संवत्सरमुख्यम् ५,५,१,१६
यो वै सूनृतायै दोहं १,६,११,५
यो वै सोममप्रतिष्ठाप्य ३,१,२,९
यो वै सोमꣳ राजानम् ३,१,२,२
यो वै सोमस्याभिषूयमाणस्य ३,१,८,३
यो वै स्तोमानामवमं ७,१,३,७
यो वै स्वार्थेतां यताꣳ ६,२,४,२
योऽश्रुतꣳ शृतमाह सः ६,३,१०,४
योऽस्यैवं बन्धुतां वेद १,५,१,५
रक्षसां भागोऽसि १,१,५,१५; ३,९,११; ६,३,९,५
रक्षस्या २,३,१३,३
रक्षाꣳसि वा एतत् पशुꣳ ३,४,१,२
रक्षाꣳसि वा एतद्यज्ञꣳ ५,२,२,९
रक्षोहणं वाजिनम् १,२,१४,१६
रक्षोहणो वलगहनः १,३,२,१,११-१२,१४-१५; ६,२,११,३
रक्षोहणौ वलगहनौ १,३,२,१६-१९
रजता हरिणीः सीसा ५,२,११,४
रजनो वै कौणेयः २,३,८,१
रजाश्वया १,२,११,६
रथचक्रचितं चिन्वीत ५,४,११,५
रथन्तरं च ३,४,४,११
रथन्तरं छन्दः ४,३,१२,१९
रथंतरं दिवा भवति ७,४,१०,३
रथंतरं पूर्वेऽहन्त्साम ७,१,४,५
रथन्तरꣳ सामभिः पातु ४,४,१२,२
रथमुख ओजस्कामस्य ३,४,८,५
रथमुष्णिहाभिः ५,७,१४,१०

❁